॥ श्रीः ॥

# याज्ञवल्क्य शिक्षा

'शिक्षावल्ली' विवृतिसमलङ्कृता ।



दीक्षितोपाह्व-

श्री अमरनाथशास्त्रि-सम्पादिता ।

व्याकरणाचार्य-ललिताप्रसाद-डबराल-

महोदयेन संशोधिता च ।

१९९४ वैक्रमाब्दः

मूल्यम् सपादैकोरूप्यकः

# प्राक्कथनम् ।

अयि विगतमत्सरा गुणैकपक्षपातिनः कुशीलवाः !

अध्ययनानन्तरं वृत्युपार्जनं कर्तव्यमित्यावश्यकनियमानुसारमज्ञानाद्वा दुरदृष्टवशाद्वा वाराणसीं विहाय वृत्युपार्जनाय हरद्वारस्थ-ऋषिकुल-ब्रह्मचर्य्याश्रमे वर्षपर्यन्तमध्याप्य ततश्च शेखावाटी-प्रान्तस्थ-फतेहपुरनगरे श्रीशाकम्भरी-संस्कृत-विद्यालयेऽध्यापनकार्यमकरवम् । एतस्मिन्नवसरे केश्चन विद्वन्मित्रप्रवरैर्नैकवारं याज्ञवल्क्यशिक्षायाः सरलटीकानिर्माणाय प्रेरित अभूवम् । स्वयञ्चास्य ग्रन्थस्य दुर्बोधतामधिगम्य कस्याश्चन नवीनटीकाया आवश्यकतामन्वभवम् । तदहं विद्वन्मित्रमण्डल्याः शुभाशीर्भिः, तेषां साहाय्येन चात्र दुस्तरे कार्ये समवतरम्,

यैर्यैर्महानुभावैः पुस्तकप्रदानेन मध्ये मध्ये यथावसरं साहाय्यप्रदानेन, दुर्बोधस्थलेषु समुत्तरणोपायोद्बोधनेनाहमनुगृहीतस्तेषामुपकारभारं सधन्यवादं विनतेन शिरसा समुद्वहामि । तेषां नामानि च सादरं प्रकाशयामि ।

कतिपयानां श्लोकानां भावार्थस्फोरणविषये, मध्ये मध्ये यथावसरं विविध-सम्मतिप्रदानेन भूमिकादिलेखनविषये, मुद्रण-व्ययविषये च सर्वतोऽधिकं साहाय्यमाचरतां परमसुहृत्प्रवराणां श्रीमतां ललिताप्रसाद डबराल महोदयानां नाम सर्वप्रथममुल्लेखनीयमस्ति ।

ततश्च मध्ये मध्ये सम्मतिप्रदानेन मुद्रण-व्यये चाधिकसाहाय्य—प्रदानेन समुपकुर्वतां भारतप्रसिद्धविदुषां हिन्दूविश्वविद्यालयीय-धर्मविज्ञान-विभागे प्रधानपदमलङ्कुर्वाणानां वेदाचार्य-श्रीविद्याधरशर्मणामाहिताग्नीनां नितरामुपकार-भारं बिभर्मि ।

उच्चारणादिविषये साहाय्यं कुर्वतां पूज्यपितृव्यचरणानां श्रीमदम्बिकादत्त महोदयानाम्, 'जावजी भट्ट' इत्युपाख्य श्रीगणपति दीक्षितानाम्, शिक्षागुरूणां सुप्रसिद्धसप्तर्षिसोमनाथपाठकमहोदयानां, मुद्रणादिविषये च साहाय्यमाचरतां सुप्रभातसम्पादकानां श्रीकेदारनाथशर्मसारस्वतमहोदयानाञ्च नितरामुपकृति—मुररीकरोमि ।

अन्ते च हरद्वारस्थ-ऋषिकुल-ब्रह्मचर्याश्रमस्य भूतपूर्वप्रधानवेदाध्यापकानां श्रौतस्मार्त-कर्मानुष्ठाननिष्ठानां सारस्वतवंशावतंसानां श्रीविश्वनाथशास्त्रिणां स्मरणमत्यावश्यकं वरीवर्त्ति । यतः प्रथमं तैरेव कृतवाग्द्वारे विषयेऽस्मिन् प्रवृत्तिनिदानतया तेषां कृतज्ञतामुरीकुर्मः ।

प्रार्थये चान्ते राधाजानिं यदियं टीका छात्राणां सततमुपकारिणी विदुषाञ्च सन्तोषकारिणी स्यात्-तदैव सफलः स्यान्मे प्रयासः ।

विद्वज्जनचरणानुरागी—

अमरनाथः सारस्वतः ।

एतद्ग्रन्थपरिशोधनकाले समुपलब्धाऽऽदर्शपुस्तकानां संकेतः—

"क" संज्ञकं "श्रीवेङ्कटेश्वर" मुद्रित संहिता परिशिष्टस्थम् ।

"ख" ,, "निर्णयसागर" ,, सभाष्यसंहिता परिशिष्टस्थम् ।

"ग" ,, "चौखम्बा" ,, शिक्षासंग्रहस्य प्रथमम् ।

"घ" ,, "गढ़वाली प्रेस, देहरादून" मुद्रितं शिक्षालोक टीका सहित ।

"ङ" ,, लिखितम् अस्मद् गुरुवर्यैः श्रीसप्तर्षिसोमनाथ पाठकमहोदयैः संशोधितम् ।

"च" ,, लिखितम् मूलम् सटिप्पणम् २१ पत्रात्मकम् ।

"छ" ,, ग्रन्थान्तरसंगृहीत पाठान्तरात्मकम् ।

"ज" ,, लिखितम् ३० पत्रात्मकम् प्रति पृष्ठ ७ पङ्क्त्यात्मकम् प्रति पङ्क्ति २१ अक्षरात्मकञ्च पं. श्री मार्त्तण्डशास्त्रि घोड़ेकर महोदयात् प्राप्तम् ।

# याज्ञवल्क्य शिक्षावल्ली भूमिका ।

अयि ! पाठकमहोदयाः !

सुप्रख्यातमेवैतत्तत्रभवत्तां विद्वद्धौरेयाणां यत्पुरुषार्थसाधनभूमिर्मनुजदेहलाभ एव। पुरुषार्थश्च धर्मार्थकाममोक्षभेदैश्चतुर्विधस्तत्राऽर्थकामाऽवेव सेवमानाः पशुसमानतां नातिशेरते। आद्यन्तसाधनैकपरायणा एवात्मनो नरत्वं सफलयन्ति रहयन्ति च पशुत्वम् । चरमस्याऽऽत्मरूपत्वादाद्यस्य च चोदनात्मकत्वात्तयोर्वेदैकसमधिगम्यत्वमेव । तदाह—श्रुतिः "नाऽवेदविन्मनुते ब्रह्म किञ्चित्" इति चोदनाऽपि प्रवृत्तिनिवृत्तिलक्षणा श्रौतविध्यादिसमधिगम्यैव, अतोऽधिकारिणा ब्रह्मराशिरवश्यं वेदितव्यः । अन्यथा तस्याऽधिकारित्व-( ब्राह्मण्य)मेव रक्षितं न स्यात्, तदुक्तं श्रीमद्भिः पतञ्जलिभिः पाणिनीयेमहाभाष्ये—

तपः श्रुतञ्च योनिश्च त्रयं ब्राह्मणकारकम् ।
तपःश्रुताभ्यां यो हीनो जातिब्राह्मण एव सः ॥ इति

आहुश्च—

योऽनधीत्य द्विजो वेद-मन्यत्र कुरुते श्रमम् ।
स जीवन्नेव शूद्रत्व-माशु गच्छति सान्वयः ॥ इति

वेदाध्ययनफलमाह स्मृतिः—

वेदाभ्यासरतं क्षान्तं पञ्चयज्ञक्रियान्वितम् ।
न स्पृशन्तीह पापानि महापातकजान्यपि ॥ इति

योगियाज्ञवल्क्यो शिक्षायां "संहिता नयते सूर्य" मित्यारभ्य "वेदे त्रिवृति मज्जति" या. शि. पृ. २६–२७ इत्यन्तेन श्लोकत्रयेण वेदाध्ययन माहात्म्यमाह ।

को नाम वेद इत्यपेक्षायामाह भगवान् यास्काचार्यो निरुक्ते "मन्त्रब्राह्मणयोर्वेदनामधेयम्" इति, प्रपञ्चितश्चैतद्विस्तरतः टीका-

याम् २५ पञ्चविंशतितमे पृष्ठे तत एवावगन्तव्यम् । सोऽयं मन्त्र-ब्राह्मणात्मको वेदराशिः शब्दार्थोभयात्मकः ।

तत्रार्थात्माऽखिलप्रपञ्चाधिष्ठानम् सकलपुरुषार्थानां चरमावधिः परमात्मैव । यमेव श्रुतयः—" सर्वे वेदास्तत्पदमामनन्ति" इति सुश्रावयन्ति । स्मरन्ति च स्मृतयः—"सर्वैर्वेदैरहमेव वेद्यः" इत्यादि ।

तस्य च तथाविधस्यार्थस्य तदविरहितस्वभावचित्कलामय-प्रणवात्मक-ब्रह्मविद्याप्रतिष्ठानम् सैव नित्यप्रकाशस्य विश्वप्रवृत्ति-बीजा शब्दात्मा वेदवाणी प्रथमो विमर्शः ।

तथा च महाभारते शान्तिपर्वणि—

अनादिनिधना नित्या वागुत्सृष्टा स्वयम्भुवा ।
आदौ वेदमयी वाणी यतः सर्वाः प्रवृत्तयः ॥ इति

एतामेव वाणीं महावैयाकरणा भर्तृहरिपादा इत्थं स्तुवन्ति—

अनादिनिधनं ब्रह्म शब्दतत्त्वं यदक्षरम् ।
विवर्ततेऽर्थभावेन प्रक्रिया जगतो यतः ॥ इति

सा च " सूक्ष्मामर्थेनाऽप्रविभक्ततत्त्वा " मित्यादिश्रुतिदिशा शब्दार्थयुगलस्वभावाऽपि प्रलये सकलभेदानामभावादेकरूपैवान्त-र्निलीनचराचरजगत्काऽवतिष्ठते । सृष्टिकाले च जगद्बहिरिवो-द्वमन्ती विवर्तते ।

संविन्मय्यपि सा मलिनसत्त्वैः स्वीययोगक्षेमसाधने योजयितु-मशक्या तद्बुद्धिधीर्षया परमदयालुभिः साक्षात्कृतधर्मतत्त्वैः परावरज्ञैः शुद्धसत्त्वैर्महर्षिभिरार्षेण विज्ञानेन परिगृहीता जगत्यामवतारिता । तदयमवतार एव शब्दार्थोभयात्मको वेदराशिरेकोऽपि प्रतिपत्तॄणां प्रज्ञाबलह्रासमनुचिन्त्य शाखाभेदान्नानारूपैर्विभाजितो ग्रन्थरूपेणाऽ-भ्यस्यतेऽधुनाऽपि परन्त्वेतद्विशेषतोऽवधेयमत्राऽऽपद्यते यदियं वेदवाणी यथाविन्यस्तहस्तपाद्याद्यवयवविशेषैर्महर्षिभिर्यत्र यत्र शा-खायाम् यादृक् स्वरवर्णानुपूर्वी विशिष्टार्षेण चक्षुषा दृष्टा तथैव विल्मा-वतारक्रममनुरुद्धा प्रादुर्भाविता न तु लेशतोऽपि विपरीता । अत एव तथैवाभ्यसनीयाऽपि भवति । अन्यथाऽभ्यासे न केवलं विफलता

किन्तु "ह्रस्तहीनं तु योऽधीते स्वरवर्णविवर्जितम् । ऋग्यजुःसामभिर्दग्धो वियोनिमधिगच्छति" इति "मन्त्रो हीनः स्वरतो वर्णतो वा" इत्यादिदिशा वा विपरीतार्थाऽऽपादकता च शिरस्यापतति।

तादृशी स्वरवर्णानुपूर्वी हस्तपादाद्यवयवानां विशेषरूपेणाऽवस्थितिश्चाधुना महति कालसाम्पराये विच्छिन्नायां च ऋषिपरम्परायां कथमवगता सुरक्षिता च स्यादिति दयालुभिर्महर्षिभिः शिक्षाग्रन्थानामवतारः कृतः।

शिक्षा नाम यया मन्त्राणाम् पदवर्णमात्रास्वरादिज्ञानं वर्णोच्चारणविधिपरिज्ञानपूर्वकस्थानादिपरिचयश्च भवति। तदाहु ऋग्वेदभाष्यभूमिकायाम् सायणाचार्याः—

"शिक्षां व्याख्यास्यामः। वर्णः स्वरः मात्रा बलं साम।
सन्तान इत्युक्तः शिक्षाध्यायः" ( तै० उ० ) इति॥

वर्णोऽकारादिः। स चाङ्गभूतशिक्षाग्रन्थे स्पष्टमुदीरितः "त्रिषष्टिश्चतुःषष्टिर्वा वर्णाः सम्भवतो मताः। प्राकृते संस्कृते चापि स्वयं प्रोक्ताः स्वयम्भुवेत्यादिना ( पा० शि० ३ )। स्वर उदात्तादिः, सोऽपि तत्रोक्तः "उदात्तश्चाऽनुदात्तश्च स्वरितश्च स्वरास्त्रयः" ( पा० शि० ११ ) इति। मात्रा ह्रस्वादिः, सापि तत्रोक्ता "ह्रस्वो दीर्घः प्लुत इति कालतो नियमा अचीति ( पा० शि० ११ )। बलं स्थानप्रयत्नौ, तत्राऽष्टौ स्थानानि वर्णानामित्यादिना (पा० शि० १३) स्थानमुक्तम्। "अचोऽस्पृष्टा यणस्त्वीषदित्यादिना ( पा० शि० ३८ ) प्रयत्न उक्तः। सामशब्देन साम्यमुक्तम्, अतिद्रुतातिविलम्बितगीत्यादिदोषराहित्येन माधुर्यादिगुणयुक्तत्वेनोच्चारणं साम्यम्। "गीती शीघ्री शिरःकम्पीत्यादिनोपांशु दष्टं स्वरितमित्यादिना ( पा० शि० ३२, ३५ ) दोषा उक्ताः। "माधुर्यमक्षरव्यक्तिरित्यादिना" ( पा० शि० ३३ ) गुणा उक्ताः। सन्तानः संहिता, वायवायाहीत्यत्रावादेशः, इन्द्राग्नी आगतमित्यत्र प्रकृतिभावः, एतच्च व्याकरणेऽभिहितत्वाच्छिक्षायामुपेक्षितम्। शिक्ष्यमाणवर्णादिवैकल्ये बाधस्तत्रोदाहृतः "मन्त्रो हीनः स्वरतो वर्णतो वा मिथ्याप्रयुक्तः ( पा० शि० ५२ ) इत्यादिना इति॥

इत्येवं वेदाऽभ्यासोपकारितया वेदाङ्गत्वं शिक्षादीनामुपपद्यते। तत्र "शिक्षा घ्राणं तु वेदस्य मुखं व्याकरणं स्मृतम्"—इत्याद्युक्त-

दिशा शिक्षाया घ्राणत्वप्रतिपादनेनाऽतीवावश्यकत्वमङ्गीकृतम्, यद्यपि शरीरस्थोच्चस्थानगतं मुखस्थानीयं व्याकरणं तथापि नासिकाया मुखोपरि स्थित्या तत्स्थानाऽपन्ना शिक्षैव सर्वोपरिवरीवर्त्ति, पदसाधुत्वमात्रविधायकं व्याकरणम् उच्चारणादिविधिहीनं सत् नासिकाविरहितं मुखमिव न शोभत इति शिक्षाया वेदनासिकात्वमाञ्जस्येन सयुक्तिकं सम्पद्यते ।

यद्यपि पाणिनीयाद्या अनेके शिक्षाग्रन्थाः सन्ति तथाऽपि तेषामपूर्णत्वादन्यान्यशाखाविषयत्वाच्च सर्वेषां विशेषतो वाजसनेयिनां परमोपकाराय योगियाज्ञवल्क्यमहर्षिभिः प्रणीतैवेयं शिक्षा सर्वाङ्गपूर्णा वरीवर्ति ।

त इमे शिक्षाप्रणेतारो महर्षयः परमप्राचीना उपनिषत्सु गार्ग्यादेर्ब्रह्मविद्योपदेष्टारः श्रूयन्ते ।

अस्या व्याख्ये वेदविद्याभूषण पं० विश्वनाथशर्मरचिता "शिक्षालोकटीका" तथा पं० ज्वालाप्रसाद मिश्रकृता "भाषा टीका" इति द्वे उपलभ्येते; किन्तु ततो न सम्यक्तया पदार्थबोधोऽपि जायते दूरे तात्पर्यार्थः । वेदाङ्गतयाऽस्य ग्रन्थस्य दुरवबोधता तु स्फुटैवेति गुरुपरम्परागतसम्प्रदायपरिशुद्धविज्ञानमेवात्र तरिरिति तामेवोपजीव्य वल्लीनामटीकाकर्तुरयं सकलः प्रयासो विदुषां प्रमोदास्पदम् छात्राणामतीवोपयोगीति नात्र संदेहलेशः सफलः स्यादित्याशासे ।

यच्चात्र मूले स्पष्टमनुक्तमपि प्रासङ्गिकमपेक्षितमस्ति तत्तत्र प्रसङ्गेऽप्रतिषिद्धं परमतमनुमतं भवतीतिरीत्या टीकायाम् टिप्पणे वा यत्नान्नियोजितम् । तद् यथा "गुरोरनुमतिं कुर्याद्-इत्यादि ( पृ० १५ ) श्लोकव्याख्यायाम् अध्ययनक्रमोऽञ्जलिप्रकारः पादोपसंग्रहणशिक्षा च विशदीकृता "प्रणवं प्राक् प्रयुञ्जीत" इत्यादि (पृ० १७) श्लोकव्याख्याने तु सोदाहरणं शास्त्राभ्यासाऽऽरम्भसमाप्तिरीतिः शास्त्राचार्यसम्प्रदायप्रथानुकूल्येन सम्यक् प्रदर्शिता तत्र रेखाद्वारा हस्तादिमुद्रा विन्यासः साक्षादिवोपदिष्टः ( पृ० ३६ ) । "उदात्तं तु भ्रुवः" "षडङ्गुलंतु जात्यस्य" इत्यादीनां ( पृ० ३८-३९ ) सोदाहरणं व्याख्यानन्तु नेत्रविहीनस्यापि नेत्रप्रदानम् तथोदात्तादिसूचिकानां रेखानां श्लोकनिबद्धाः परिभाषाः ( पृ० ४१-४३ ) रङ्गातिरङ्गविषयकं ( पृ० १३७-१३५ ) स्पष्टव्याख्यानम् । एवमेवाऽन्यत्राऽपि यत्र तत्रदुर्बो-

घस्थलेषु तत्प्रातिशाख्यादिप्रमाणोपन्यासपुरस्सरमुदाहरणप्रत्युदाहरणोपन्यसनानि तु नितरामुपकुर्वन्ति । किम्बहुना, टीकेयं सर्वतोभावेन यथोपकारिणी स्यात्तथा प्रयतने सर्वथा सफलमनोरथ एव टीकाकारः।

अस्य ग्रन्थस्य प्रकरणविभागः सूत्राणां पौर्वापर्यक्रमश्च सम्प्रदायपरम्पराऽवगतपरिशुद्धविज्ञानम् 'क्वचिच्च. तदविरोधनीं सप्तर्षिमहोदयेभ्यो लब्धां(ङ)चिह्नितां १९७१ वैक्रमसंवत्सरे लिखितां सञ्चिकामाश्रित्यैव कृतः। इति नात्र स्वमतिकल्पितकल्पनापराधः।

शिक्षाया स्वरवर्णानुशासनमेव प्रधानविषयोऽतोऽत्र प्रथमं स्वरप्रकरणम् ततो वर्णप्रकरणम् यच्चान्यदवशिष्टमेतद्विषयकम् परिज्ञानं तत्परिशिष्ट ( प्रकीर्णक ) प्रकरणेनोपगृहीतमितिप्रकरणत्रयमत्र वर्तते।

विदुषां वशंवदः—

श्रीललिताप्रसादडबरालः।

श्रीमद्गङ्गाधरज्योतिर्विद्भ्यो ज्योतिःशास्त्रञ्चाधीत्य, मीमांसकशिरोमणि-श्रीनित्यानन्दसारस्वतमहोदयेभ्यः, म० म० पं० नित्यानन्द पर्वतीयमहोदयेभ्यस्तदनन्तरं प्रसिद्धविद्वद्भ्यः श्रीहाराणचन्द्र-शास्त्रिमहोदयेभ्यश्च धर्मशास्त्र-मीमांसादिग्रन्थानधीत्य तत्र विशिष्टां व्युत्पत्तिं समपादयन् । कर्मकाण्डेऽपि वैशिष्ट्यमासादयितुं काश्यां सुप्रसिद्ध-वैदिकप्रवरेभ्यः श्रीसप्तर्षिसोमनाथमहोदयेभ्य अग्निग्रन्थ-पर्यन्तमधीतवन्तः महामहोपाध्याय प्रभुदत्तशास्त्रिमहोदयेभ्यश्च कुण्डनिर्माणशिक्षां विशेषतः प्राप्तवन्त इमे भारतप्रसिद्धभिषक्शिरोमणिभ्यः श्रीउमाचरण कविराजमहोदयेभ्यः आयुर्वेदशास्त्रमधीतवन्तः, रसादिनिर्माणनैपुणीञ्चाधिगतवन्तः । इमे चिकित्सा-चतुरा अपि सन्ति ।

किम्बहुना । स्वल्प एव वयसि विविधशास्त्रदक्षतामधिगत्यापि साग्निकाः सन्तः साधुस्वभावाः ब्राह्मणवृत्तयः केवलमध्ययनाध्यापन-यजन-याजनादिब्राह्मणकृत्येषु संलग्ना एव तिष्ठन्तीति परं प्रमोदस्थानमस्माकं सनातन-धर्म-मर्यादा-संरक्षण-प्रवणानामिति

एतेषां पितृव्याः श्रीमदम्बिका चरणशर्म्माण अपि अभ्यस्त-मन्त्र-प्रकृति-विकृतिकाः शिष्येषु घनान्तमन्त्राऽध्यापकाः श्रौतस्मार्तकर्माऽनुष्ठाननिष्ठाः पितृचरणानामादर्शं संरक्षयन्ति । अलमत्र विदितकुल-परिचयेन ॥

सुप्रभात-कार्यालयः
अनन्तचतुर्दशी
१९९४

श्री केदारनाथशर्मा सारस्वतः ।
( सुप्रभात-सम्पादकः )

# विषय सूची



## अथाऽध्ययनविधिः

# टीकाकर्तुः सङ्क्षिप्तः परिचयः ।

अस्य ग्रन्थस्य टीकाकारः श्रीमान् अमरनाथशास्त्री दीक्षित-महोदयः वाराणसीस्थे सुप्रसिद्धे सारस्वतभूसुरान्वये १९४९ तमे वैक्रमाब्दे जनिमलभत । एतेषां प्रपितामहाः श्रीबलीराममिश्राः प्रह्लादपुर्यां मुलताननगरे सुप्रसिद्धा विद्वांस आसन् । तेषां कनिष्ठाऽग्रजास्तृतीयतनयाः कैलाशवासिनो महर्षिकल्पाः श्रीजनार्दनमिश्राः काश्यां सकलं शुक्लयजुर्वेदम्, तदङ्गभूतं निखिलकर्मकाण्डशास्त्रम्, शतपथब्राह्मणञ्चाधीत्य, अहर्निशं स्नानसन्ध्या-स्वाध्यायैः—'वेदमेवाभ्यसेन्नित्यम्', 'अहरहः सन्ध्यामुपासीत', 'स्वाध्यायोऽध्येतव्यः' इत्यादिविधीन् सनियममक्षरशः सार्थकीकुर्वन्तो जीवनं सफलतां नयन्तश्चास्मिन् काले महर्षीणामादर्शमास्थापयन् । इमे परम-शिवभक्ताः सर्वदा भस्मोद्धूलितविग्रहाः, रुद्राक्षावृतकलेवराः, स्वाध्यायप्रवचनपरा एवादृश्यन्त । व्रतोपवासस्वाध्यायादिभिस्तपोभिरेतेषां मुखे ब्राह्मं ज्योतिर्निरन्तरं चकासते स्म । एभिः १९८५ तमे वैक्रमाब्दे फाल्गुने मासि सन्यासग्रहणं कृतम् । तदानीमेतेषां परमहंसपरिव्राजकाचार्य-श्रीसच्चिदानन्दस्वामीति संज्ञा समभवत् । अशीतिवर्षात्मके वयसि आमरणं स्वाध्यायरतानामेतेषां कैवल्य-लाभोऽभूत् ।

प्रातःस्मरणीयानां श्रीजनार्दनमिश्रमहोदयानां तनयद्वयं समजनि । तत्र प्रथमतनूजन्मनां विद्वत्प्रवराणां श्रीमद्गङ्गाधरदीक्षितमहोदयानां ज्येष्ठतनूजन्मान एवास्याः शिक्षावल्ल्याः प्रणेतारः सन्ति । श्रीमन्तः श्रीगङ्गाधरशास्त्रिमहोदया अपि काशीस्थविद्वत्समाजे लब्धकीर्तयो वैदिकाग्रेसरा आहिताग्नयश्च वर्तन्ते । एभिः १९७७ तमे वैक्रमाब्दे ज्योतिष्टोमयज्ञं विधाय दुर्दान्तेऽस्मिन् समये वैदिकधर्ममर्यादाया आदर्शं समुपस्थापितम् । साम्प्रतमिमे विरक्तभावमापन्नाः भगवत्सेवायामेव जीवनं यापयन्ति ।

एतेषां ज्येष्ठतनूजन्मानः श्रीमदमरनाथदीक्षितमहोदयाः शैशव एव पितामहचरणेभ्यः पितृचरणेभ्यश्च वेद-वेदाङ्ग-कर्मकाण्डग्रन्था-नधीत्य तदनन्तरं वैशिष्ट्यमासादयितुं राजकीयमहाविद्यालयप्रधान-व्याकरणाध्यापक-श्रीमद्रामभवनमहोदयेभ्यो व्याकरणशास्त्रम्,

श्रीमद्गङ्गाधरज्योतिर्विद्भ्यो ज्योतिःशास्त्रञ्चाधीत्य, मीमांसकशिरोमणि–श्रीनित्यानन्दसारस्वतमहोदयेभ्यः, म० म० पं० नित्यानन्द पर्वतीयमहोदयेभ्यस्तदनन्तरं प्रसिद्धविद्वद्भ्यः श्रीहाराणचन्द्र-शास्त्रिमहोदयेभ्यश्च धर्मशास्त्र-मीमांसादिग्रन्थानधीत्य तत्र विशिष्टां व्युत्पत्तिं समपादयन् । कर्मकाण्डेऽपि वैशिष्ट्यमासादयितुं काश्यां सुप्रसिद्ध-वैदिकप्रवरेभ्यः श्रीसप्तर्षिसोमनाथमहोदयेभ्य अग्निग्रन्थ-पर्यन्तमधीतवन्तः महामहोपाध्याय प्रभुदत्तशास्त्रिमहोदयेभ्यश्च कुण्डनिर्माणशिक्षां विशेषतः प्राप्तवन्त इमे भारतप्रसिद्धभिषक्शिरोमणिभ्यः श्रीउमाचरण कविराजमहोदयेभ्यः आयुर्वेदशास्त्रमधीत-वन्तः, रसादिनिर्माणनैपुणीञ्चाधिगतवन्तः । इमे चिकित्सा–चतुरा अपि सन्ति ।

किम्बहुना । स्वल्प एव वयसि विविधशास्त्रदक्षतामधिगत्यापि साग्निकाः सन्तः साधुस्वभावाः ब्राह्मणवृत्तयः केवलमध्ययनाध्यापन-यजन-याजनादिब्राह्मणकृत्येषु संलग्ना एव तिष्ठन्तीति परं प्रमोदस्थान-मस्माकं सनातन-धर्म-मर्यादा-संरक्षण-प्रवणानामिति

एतेषां पितृव्याः श्रीमदम्बिका चरणशर्म्माण अपि अभ्यस्त-मन्त्र-प्रकृति-विकृतिकाः शिष्येषु घनान्तमन्त्राऽध्यापकाः श्रौतस्मार्तकर्मा-ऽनुष्ठाननिष्ठाः पितृचरणानामादर्शं संरक्षयन्ति । अलमत्र विदितकुल-परिचयेन ॥

सुप्रभात–कार्यालयः<br>अनन्तचतुर्दशी<br>१९९४

श्री केदारनाथशर्मा सारस्वतः ।<br>( सुप्रभात-सम्पादकः )

# विषय सूची



## अथाऽध्ययनविधिः

| संख्या | विषय | पृष्ठ |
|---|---|---|
| ३० | रङ्गस्वरोच्चारणप्रकारः सदृष्टान्तः । तस्य अनुस्वारत्वम् । अनुस्वाराद्वैलक्ष्यप्रदर्शनम् । उपधानिकाऽनुनासिकस्योच्चारणविधिः । रेफव्यवहितेऽपि स्वरे परे रङ्गत्वसमर्थनम् । शौनकादीनां मते स्वरव्यञ्जनाऽन्यतरपरत्वे नकारविकारेणोपधाऽनुनासिक्यस्य रङ्गत्वाऽविशेषः । रङ्गपरिगणनम् । अत्रत्यासु टीकासु टिप्पणीषु च तत्तद्विशेषाः । वर्णोच्चारणोपसंहारश्च । | १२७-१३६ |
| ३१ | पदोच्चारणे विशेषः । यथेच्छपाठे निन्दा गुणविशिष्टे स्तुतिः । आम्रेडितसंज्ञा तत्कार्यं च । उपचरितकार्याणि सोदाहरणानि । टिप्पण्यां विशेषश्च । | १३७-१४३ |
| ३२ | संयोगपिण्डानां साप्तविध्यम् । अयःपिण्डादीनां स्वरूपाणि सोदाहरणानि । टीकासु टिप्पणीषु च तत्तद्विशेषाः । | १४४-१४६ |
| ३३ | त्रयस्त्रिंशद् व्यञ्जनानि । वर्णोच्चारणप्रयत्नाः । स्थानानि टीकासु तत्तत्करणानि च । चत्वारो यमाः टीकाटिप्पण्योश्च विशेषः । एषामुदाहरणानि स्थलानि प्रतिप्रसवश्च । | १५०-१५८ |
| ३४ | वर्गद्वितीय-चतुर्थयोः प्रथम-तृतीयत्वेन द्वित्वापत्तिदर्शनम् सोदाहरणम् । | १५६ |
| ३५ | व्यञ्जनं स्वरेण स्वरितव्यम् । | १६० |
| ३६ | वर्गाद्यस्य जस्त्वाऽनुनासिक-वर्गद्वितीयापत्तिप्रसङ्गः । | १६१ |
| ३७ | दुष्टोच्चारणनिषेधः । विद्या ग्रहणे समर्थाऽसमर्थयोर्निरूपणम् । गुरोः शुश्रूषया लब्धा विद्या फलवती भवति । तत्र गुरोः सामर्थ्यनिरूपणम् । अयोग्य गुरुकरणे निषेधः ग्रन्थोपसंहारश्च । टीकायाः ईशरूपिणोः मातापित्रोः समर्पणम् ॥ | १६२-१६६ |

॥ श्रीः ॥

श्री कृष्णः शरणम्

अथ

# श्री महर्षि-योगि-याज्ञवल्क्यप्रोक्ता
# शिक्षा

## दीक्षिताऽमरनाथ-शास्त्रिकृतया शिक्षावल्ल्याख्यया विवृत्या सहिता ।

---

॥ श्री गणेशाय नमः ॥

## अथाऽतस्त्रैस्वर्यलक्षणं व्याख्यास्यामः ।

प्रणम्य पितरौ तद्वद् गुरुं सप्तर्ष्युपाह्वयम् ।
विवृणोमि यजुःशिक्षां याज्ञवल्क्यप्रभाषिताम् ॥१॥

अथ शब्द आनन्तर्यार्थोऽपि स्वरूपतो मङ्गलप्रयोजनः । अन्यार्थमानीयमानदध्यादिवत् । तथा च स्मृतिः—"ओङ्कारश्चाथशब्दश्च द्वावेतौ ब्रह्मणः पुरा । कण्ठं भित्त्वा विनिर्यातौ तेन माङ्गलिकावुभौ" इति । अत एव कात्यायनश्च "ॐकारं वेदेषु । अथकारं भाष्येषु ।" ( शु. य. प्रा. १।१८–१९ ) इति प्रोक्तवान् । तेन भाष्यन्ते पदार्था येषु तानि=भाष्याणि, इति व्युत्पत्त्या शिक्षाया अपि भाष्यत्वे मङ्गलप्रयोजनस्याऽथशब्दस्य प्रारम्भे प्रयोगः संगच्छते । अथ=गुरुप्रणाल्या वेदग्रहणानन्तरम्[1] । यतः "मन्त्रो हीनः स्वरतो वर्णतो वा

---

१ तथाहि पारस्कर गृह्यसूत्रम् "वेदꣳ समाप्य स्नायात् । इत्युपक्रम्य–विधिर्विधेयस्तर्कश्च वेदः । षडङ्गमेके । न कल्पमात्रे । कामं तु याज्ञिकस्य" । ( २।३।१–८ ) इति ॥

मिथ्याप्रयुक्तो न तमर्थमाह । स वाग्वज्रो यजमानं हिनस्ति यथे- न्द्रशत्रुः स्वरतोऽपराधात् ” ( पा० शि० ५२ ) इति पाणिनिवर्णेन स्वर-वर्णतो मिथ्याप्रयुक्तस्य वेदस्य प्रत्युत कर्मवैगुण्यद्वारा विपरीताऽनिष्टफलप्रदोक्त्या छन्दसि स्वर-संस्कारयोर्नियतत्वम् । अतः = हेतोः । त्रयाणाम् = उदात्ताऽनुदात्तस्वरितानाम् ( अवान्तर्भेदसहितानाम् ) स्वराणाम् = वर्णधर्माणाम् समूहः = त्रिस्वरी, सैव = त्रैस्वर्यम् । तस्य लक्षणम् = स्वरूपम्, तत् । व्याख्यास्यामः = विविधं वर्णयिष्यामः । वयमिति शेषः ( वयमिति सर्वनाम्ना महर्षि-र्योगियाज्ञवल्क्यो ज्ञेयः ) ।

---

अत्र कर्कादिः-मन्त्र विध्यर्थवादात्मक ब्राह्मण रूपो वेदशब्देन गृह्यते । तम् समाप्य = ग्रन्थतः स्वीकृत्य अर्थतोऽवबुध्य च गुरुणाऽनुज्ञातो ब्रह्मचारी स्नायात् । तत्रैके षडङ्गं वेदं सार्थम् । अपरे निरङ्गं वेदं सार्थम् । स्वीकृत्य स्नानमिच्छन्ति । ‘ यज्ञं वेद ’ इति याज्ञिकः । तस्य तु कामम्=यथेच्छं स्नानं भवितुमर्हति ( अर्थात् ग्रन्थमात्रं निरङ्गं वेदं स्वीकृत्य यज्ञविद्यां चाऽभ्यस्य स्नायात् । यज्ञविद्याविरहेण ग्रन्थमात्रे अधीते न स्नायादिति निषेधः ) । अतो यज्ञानुष्ठानविरहिणम्प्रत्येव श्रुति राह–“स्थाणुरयम्भारहारः, ( नि० २।६ ) । स्मृतिश्च ‘ यं यं क्रतुमधीतेऽसौ, ( या० स्मृ० १।४७ ) । इत्यादिना । इत्थं पूर्वं गुरुप्रणाल्या वेदं ग्रन्थतः स्वीकृत्य अनन्तरं सति सामर्थ्ये सम्पूर्णफलेच्छया, स्वस्मिन् आचार्यत्वसंपादनाय वा वेदं लक्षणतोऽर्थतश्च विचार्य गुरुकुलात् निर्गच्छेत् । तथाहि ‘ वेदस्वीकरणं पूर्वं विचारोऽभ्यसनं जपः । तद्दानं चैव शिष्येभ्यो वेदाभ्यासो हि पञ्चधा ’ ( द० स्मृ० २।३४ ) इति । ‘ लक्षणं यो न वेत्यृत्सु न कर्मफलभाग्भवेत् । लक्षणज्ञो हि मन्त्राणां सकलं भद्रमश्नुते ’ इति च विहिते लक्षणतो वेदविचारे ( अर्थज्ञानस्य लक्षणपूर्वकत्वात् । तथाहि ‘ स्वरो वर्णोऽक्षरं मात्रा दैवं योगार्पमेव च । मन्त्रं जिज्ञासमानेन वेदितव्यं पदे पदे’(बृ०दे०) इति) प्राप्ते षडङ्गेषु ‘ शिक्षा कल्पो व्याकरण मित्यादिना शिक्षाशास्त्रस्य प्राथम्य दर्शनात्, वर्णोत्पत्तिप्रक्रिया ज्ञापनेनान्तरङ्गत्वाच्च सम्यगुक्तम् ‘ अथ = गुरुप्रणाल्या वेदग्रहणानन्तरम् ’ इति ॥ किं च–‘ पदक्रमविभागज्ञो वर्णक्रमविचक्षणः । स्वरमात्राविशेषज्ञो गच्छेदाचार्यसंपदम् ( ऋ० प्रा० १।८ तै० प्रा० २४।६ ) इति । तथा च नारदः ‘पञ्चविधमाचार्यकं नाम मुखन्यासः ( ना० शि० २।७।६ ) इत्यादि । मनुरपि ‘उपनीय तु यः शिष्यं वेदमध्यापयेद् द्विजः । सकल्पं सरहस्यं च तमाचार्यं प्रचक्षते ’ ( म० स्मृ० २।१४० ) इति दिक् ।

उदात्तश्चा ऽनुदात्तश्च स्वरितश्च तथैवं तत् ॥
लक्षणं वर्णयिष्यामि दैवतं स्थानमेव च ॥ १ ॥

उदात्तः । च=पुनः । अनुदात्तः । च=पुनः । स्वरितः । इतित्रयः । स्वराः प्रधानतो वर्णनीया इति शेषः । चकारात् एषामवान्तरभेदा अपि । तथैव । तत्=तेषां लक्षणं दैवतं स्थानं चकाराद्गोत्रादिकं वर्णयिष्यामि ॥ २ ॥

वर्णो जातिश्चेत्यादौ समुद्दिष्टान् वर्णादीन् व्याचिख्यासुराचार्यः प्रथमं वर्णानाह—

शुक्लमुच्चं विजानीयान् नीचं लोहितमेवं[3] च ।
श्यामन्तु स्वरितं विद्याद्

उच्चमुदात्तम् । शुक्लं वर्णतः श्वेतम् । विजानीयाद्विद्यात् । नीच मनुदात्तम् । लोहितं रक्तवर्णम् । एव । च । विजानीयात् । तु भिन्नक्रमः । स्वरितम् । तु पुनः । श्यामं कृष्णवर्णम् । विद्यात् बुध्येत ( इति वर्णाः ) ।

अथ दैवतानि—

अग्निर्मुच्चस्य दैवतम् ॥ २ ॥
नीचं[5] सोमं विजानीयात्स्वरिते सविता भवेत् ॥

उच्चस्य उदात्तस्य । अग्निम् । दैवतं देवताम् ( विद्यात् इति काकाक्षिगोलकन्यायेनोभयत्र संबध्यते ) ॥ २ ॥

नीचे अनुदात्ते । सोमम् । ( देवताम् ) विजानीयात् । स्वरिते स्वरे । सविता । ( दैवतं ) भवेत् ( इति दैवतानि ) ।

अथ जातीः—

उदात्तं ब्राह्मणं विद्यान् नीचं[6] क्षत्रियमेव च ॥ ३ ॥
वैश्यन्तु स्वरितं विद्याद्—

---

१ तथैव च इति क० । स्वरास्त्रयः इति घ० । २ लुप्तविभक्तिकं पदम् । ३ त मुच्यते इति क, ख, घ० । अस्मिन्प्रकरणे विद्यादित्यस्य स्थाने विंद्यादिति प्रदर्शितम् घ—व्यतिरिक्तेषु । ४ ग्निरु इति ग, च० । ५ नीचं इति घ० । ६ चः क्षत्रियए इति घ० ।

॥ श्रीः ॥

श्री कृष्णः शरणम

अथ

# श्री महर्षि-योगि-याज्ञवल्क्यप्रोक्ता

# शिक्षा

## दीक्षिताऽमरनाथ-शास्त्रिकृतया शिक्षावल्ल्याख्यया विवृत्या सहिता ।

---

॥ श्री गणेशाय नमः ॥

## अथाऽतस्त्रैस्वर्यलक्षणं व्याख्यास्यामः ।

प्रणम्य पितरौ तद्वद् गुरुं सप्तर्ष्युपाह्वयम् ।
विवृणोमि यजुःशिक्षां याज्ञवल्क्यप्रभाषिताम् ॥१॥

अथ शब्द आनन्तर्यार्थोऽपि स्वरूपतो मङ्गलप्रयोजनः । अन्यार्थमानीयमानदध्यादिवत् । तथा च स्मृतिः—"ओङ्कारश्चाथशब्दश्च द्वावेतौ ब्रह्मणः पुरा । कण्ठं भित्त्वा विनिर्यातौ तेन माङ्गलिकावुभौ" इति । अत एव कात्यायनश्च "ॐकारं वेदेषु । अथकारं भाष्येषु ।" (शु. य. प्रा. १।१८-१९) इति प्रोक्तवान् । तेन भाष्यन्ते पदार्था येषु तानि=भाष्याणि, इति व्युत्पत्त्या शिक्षाया अपि भाष्यत्वे मङ्गलप्रयोजनस्याऽथशब्दस्य प्रारम्भे प्रयोगः संगच्छते । अथ=गुरुप्रणाल्या वेदग्रहणानन्तरम्[1] । यतः "मन्त्रो हीनः स्वरतो वर्णतो वा

---

१ तथाहि पारस्कर गृह्यसूत्रम् "वेदꣳ समाप्य स्नायात् । इत्युपक्रम्य—विधिर्विधेयस्तर्कश्च वेदः । षडङ्गमेके । न कल्पमात्रे । कामं तु याज्ञिकस्य" । (२।६।१-८) इति ॥

मिथ्याप्रयुक्तो न तमर्थमाह । स वाग्वज्रो यजमानं हिनस्ति यथेन्द्रशत्रुः स्वरतो ऽपराधात् " ( पा० शि० ५२ ) इति पाणिनिवर्णेन स्वर-वर्णतो मिथ्याप्रयुक्तस्य वेदस्य प्रत्युत कर्मवैगुण्यद्वारा विपरीताऽनिष्टफलप्रदोक्त्या छन्दसि स्वर-संस्कारयोर्नियतत्वम् । अतः = हेतोः । त्रयाणाम् = उदात्ताऽनुदात्तस्वरितानाम् ( अवान्तर्भेदसहितानाम् ) स्वराणाम् = वर्णधर्माणाम् समूहः = त्रिस्वरी, सैव = त्रैस्वर्यम् । तस्य लक्षणम् = स्वरूपम्, तत् । व्याख्यास्यामः = विविधं वर्णयिष्यामः । वयमिति शेषः ( वयमिति सर्वनाम्ना महर्षियोगियाज्ञवल्क्यो ज्ञेयः ) ।

---

अत्र कर्कादिः-मन्त्र विध्यर्थवादात्मक ब्राह्मण रूपो वेदशब्देन गृह्यते । तम् समाप्य = ग्रन्थतः स्वीकृत्य अर्थतो ऽवबुध्य च गुरुणाऽनुज्ञातो ब्रह्मचारी स्नायात् । तत्रैके षडङ्गं वेदं सार्थम् । अपरे निरङ्गं वेदं सार्थम् । स्वीकृत्य स्नानमिच्छन्ति । 'यज्ञं वेद' इति याज्ञिकः । तस्य तु कामम्=यथेच्छं स्नानं भवितुमर्हति ( अर्थात् ग्रन्थमात्रं निरङ्गं वेदं स्वीकृत्य यज्ञविद्यां चाऽभ्यस्य स्नायात् । यज्ञविद्याविरहेण ग्रन्थमात्रे अधीते न स्नायादिति निषेधः ) । अतो यज्ञानुष्ठानविरहिणम्प्रत्येव श्रुति राह–"स्थाणु रयम्भारहारः, ( नि० २।६ ) । स्मृतिश्च ' यं यं क्रतुमधीते ऽसौ, ( या० स्मृ० १।४७ ) । इत्यादिना । इत्थं पूर्वं गुरुप्रणाल्या वेदं ग्रन्थतः स्वीकृत्य अनन्तरं सति सामर्थ्ये सम्पूर्णफलेच्छया, स्वस्मिन् आचार्यत्वसंपादनाय वा वेदं लक्षणतो ऽर्थतश्च विचार्य गुरुकुलात् निर्गच्छेत् । तथाहि ' वेदस्वीकरणं पूर्वं विचारोऽभ्यसनं जपः । तद्दानं चैव शिष्येभ्यो वेदाभ्यासो हि पञ्चधा ' ( द० स्मृ० २।३४ ) इति । ' लक्षणं यो न वेत्यृत्तु न कर्मफलभाग्भवेत् । लक्षणज्ञो हि मन्त्राणां सकलं भद्रमश्नुते ' इति च विहिते लक्षणतो वेदविचारे ( अर्थज्ञानस्य लक्षणपूर्वकत्वात् । तथाहि ' स्वरो वर्णोऽक्षरं मात्रा दैवं योगार्पमेव च । मन्त्रं जिज्ञासमानेन वेदितव्यं पदे पदे'(बृ०दे०) इति) प्राप्ते षडङ्गेषु ' शिक्षा कल्पो व्याकरण मित्यादिना शिक्षाशास्त्रस्य प्राथम्य दर्शनात्, वर्णोत्पत्तिप्रक्रिया ज्ञापनेनान्तरङ्गत्वाच्च सम्यगुक्तम् ' अथ = गुरुप्रणाल्या वेदग्रहणानन्तरम् ' इति ॥ किं च–' पदक्रमविभागज्ञो वर्णक्रमविचक्षणः । स्वरमात्राविशेषज्ञो गच्छेदाचार्यसंपदम् ( ऋ० प्रा० १।८ तै० प्रा० २४।६ ) इति । तथा च नारदः 'पञ्चविधमाचार्यकं नाम मुखन्यासः ( ना० शि० २।७।६ ) इत्यादि । मनुरपि 'उपनीय तु यः शिष्यं वेदमध्यापयेद् द्विजः । सकल्पं सरहस्यं च तमाचार्यं प्रचक्षते ' ( म० स्मृ० २।१४० ) इति दिक् ।

**उदात्तश्चा ऽनुदात्तश्च स्वरितश्च तथैवं[1] तत् ॥**
**लक्षणं वर्णयिष्यामि दैवतं स्थानमेव च ॥ १ ॥**

उदात्तः । च=पुनः । अनुदात्तः । च=पुनः । स्वरितः । इतित्रयः । स्वराः प्रधानतो वर्णनीया इति शेषः । चकारात् एषामवान्तरभेदा अपि । तथैव । तत्[2]=तेषां लक्षणं दैवतं स्थानं चकाराद्गोत्रादिकं वर्णयिष्यामि ॥ २ ॥

वर्णो जातिश्चेत्यादौ समुद्दिष्टान् वर्णादीन् व्याचिख्यासुराचार्यः प्रथमं वर्णानाह—

**शुक्लमुच्चं विजानीयान् नीचं लोहितमेवं[3] च ।**
**श्यामन्तु स्वरितं विद्याद्**

उच्चमुदात्तम् । शुक्लं वर्णतः श्वेतम् । विजानीयाद्विद्यात् । नीच मनुदात्तम् । लोहितं रक्तवर्णम् । एव । च । विजानीयात् । तु भिन्नक्रमः । स्वरितम् । तु पुनः । श्यामं कृष्णवर्णम् । विद्यात् बुध्येत ( इति वर्णाः ) ।

अथ दैवतानि—

**अग्निर्मुच्चस्य[4] दैवतम् ॥ २ ॥**
**नीचे[5] सोमं विजानीयात्स्वरिते सविता भवेत् ॥**

उच्चस्य उदात्तस्य । अग्निम् । दैवतं देवताम् ( विद्यात् इति काकाक्षिगोलकन्यायेनोभयत्र संबध्यते ) ॥ २ ॥

नीचे अनुदात्ते । सोमम् । ( देवताम् ) विजानीयात् । स्वरिते स्वरे । सविता । ( दैवतं ) भवेत् ( इति दैवतानि ) ।

अथ जातीः—

**उदात्तं ब्राह्मणं विद्यान् नीचं[6] क्षत्रियमेव च ॥ ३ ॥**
**वैश्यन्तु स्वरितं विद्याद्—**

---

१ तथैव च इति क० । स्वरास्त्रयः इति घ० । २ लुप्तविभक्तिकं पदम् । ३ त मुच्यते इति क, ख, घ० । अस्मिन्प्रकरणे विद्यादित्यस्य स्थाने विंद्यादिति प्रदर्शितम् घ—व्यतिरिक्तेषु । ४ ग्निरु इति ग, च० । ५ नीचं इति घ० । ६ चः क्षत्रियए इति घ० ।

उदात्तम् । ब्राह्मणं विप्रजातिम् । विद्यात् । च पुनः । नीच-मनुदात्तम् । क्षत्रियमेव क्षत्रियजातिमेव विद्यात् । स्वरितम् । तु पुनः । वैश्यं वणिग्जातिम् । विद्यात् ( इति जातयः ) ।

अथ गोत्राणि—

भारद्वाज मुदात्तकम् ॥
नीचं गौतममित्याहु गार्ग्यं चं स्वरितं विदुः ॥४॥

उदात्तमेवोदात्तकम् । भारद्वाजं भरद्वाजगोत्रवन्तम् । ( विद्यात् इति काकाक्षिगो० ) । नीचमनुदात्तम् । गौतमं गोतमगोत्रसमुद्भूतम् । इति इत्थम् । आहुः । बुधा इति शेषः । एवमुत्तरत्रापि । स्वरितम् । च पुनः । गार्ग्यं गर्गगोत्रम् । विदुः जानीयुः ( इति गोत्राणि ) ॥ ४ ॥

अथ छन्दांसि—

विद्यादुदात्तं गायत्रं नीचं त्रैष्टुभमेवं[2] च ।
जागतं स्वरितं विद्या देवमेवं[3] नियोगतः ॥ ५ ॥

उदात्तम् । गायत्रं गायत्रीछन्दस्कम् । विद्यात् जानीयात् । नीच-मनुदात्तम् । त्रैष्टुभं त्रिष्टुप्छन्दस्कम् । एव हि । च । विद्यात् । स्वरितम् । जागतं जगतीछन्दस्कम् । विद्यात् । नियोगतः आम्नानात् । एवम् एवम् वर्णदेवतादि । ज्ञेयमिति शेषः ॥ ५ ॥

ननु तन्त्रान्तरे स्वराणां साप्तविध्यप्रसिद्धेः अत्र त्रैविध्यमेव कथ मुक्तमित्यत आह—

गान्धर्ववेदे ये प्रोक्ता सप्त षड्जादयः स्वराः ।
त एव वेदे विज्ञेया स्त्रय उच्चादयः स्वराः ॥ ६ ॥

गान्धर्ववेदे सामवेदे । अस्य गानप्रधानत्वात् गान्धर्वत्वम् । तथा हि नारदः—'गेति गेयं विदुः प्राज्ञा धेति कारुप्रवादनम् । वेति वाद्यस्य संज्ञेन गान्धर्वस्य विरोचनम्, इति । किंच—'दारवी गात्र-वीणा च द्वे वीणे गानजातिषु । सामिकी गात्रवीणा तु तस्याः शृणुत लक्षणम्, इति ( ना० शि० १।४।१२ ) । ये षड्जादयः सप्त स्वराः । प्रोक्ताः कथिताः । ते षड्जादय एव । वेदे यजुर्वेदे । अस्यैव प्रकृतत्वात् ।

१ तु ग, च० । २ भमुच्यते क, घ० । ३ दतएवं क, घ० । देवमेव ग, च० ।

त्रय उच्चादयः उदात्तानुदात्तस्वरिताः स्वराः । विज्ञेयाः । त्रिष्वेव अन्तर्भूय स्थिता इत्यर्थः । अथ प्रसङ्गात् षड्जादीनामुत्पत्तिर्नारदीय-शिक्षायां प्रदर्शितोच्यते—

"नासां कण्ठ मुर स्तालुं जिह्वां दन्ताँश्च संश्रितः ।
षड्भिः संजायते यस्मा त्तस्मात् षड्ज इति स्मृतः ॥ १ ॥
वायुः समागतो नाभेः कण्ठशीर्षसमाहतः ।
नर्दत्यृषभवद्यस्मा त्तस्मादृषभ उच्यते ॥ २ ॥
वायुः समुत्थितो नाभेः कण्ठशीर्षसमाहतः ।
नानागन्धवहः पुण्यो गान्धार स्तेन हेतुना ॥ ३ ॥
वायुः समुत्थितो नाभे रुरोहृदि समाहतः ।
नाभिस्प्राप्तो महानादं मध्यमत्वं समश्नुते ॥ ४ ॥
वायुः समुत्थितो नाभे र्हृत्कण्ठोरःशिरोहतः ।
पञ्चस्थानस्थितस्याऽस्य पञ्चमत्वं विधीयते ॥ ५ ॥
अतिसन्धीयते यस्मा देतान्पूर्वोच्छ्रितान्स्वरान् ।
तस्मादस्य स्वरस्यापि धैवतत्वं विधीयते ॥ ६ ॥
निषीदन्ति स्वरा अस्मिन् निषाद स्तेन हेतुना" ॥ ७ ॥ इति ॥ ६ ॥

सप्तानां त्रिष्वन्तर्भावः कीदृश इत्याह—

**उच्चौ निषादगान्धारौ नीचावृषभधैवतौ ।**
**शेषास्तु स्वरिता ज्ञेयाः षड्ज-मध्यम-पञ्चमाः ॥ ७ ॥**

निषाद-गान्धारौ, उच्चौ उदात्तान्तर्भूतौ । ऋषभ-धैवतौ, नीचौ अनुदात्ताऽन्तर्गतौ । ज्ञेयौ इति शेषः । शेषाः षड्ज–मध्यम–पञ्चमाः, स्वरिताः स्वरितान्तर्लीनाः । ज्ञेयाः बोध्याः ॥ ७ ॥

अथ प्रसङ्गप्राप्त षड्जादीना मुच्चारणप्रकारो भङ्ग्या प्रदर्श्यते—

**षड्जो वेदे शिखण्ड्यांस्य ऋषभः स्यादजामुखे ।**
**गावो रम्भन्ति गान्धारं क्रौञ्चा श्चैव तु मध्यमम् ॥८॥**

---

१ एडीस्यादष इति सर्वत्र । एतत्पद्यद्वयं नास्ति ग, च० । ग पुस्तकेतु टिप्पण्याम् सप्तमश्लोकारम्भे 'श्लोकद्वयमधिकं 'ख' पुस्तके तद्यथा 'षड्जो० गीयते । २ । इतिदर्शितम् ।

शिखण्डिनो मयूरस्य आस्यं मुखं तस्मिन्। षड्ज: स्वरः। स्यादित्यावर्त्तते। ऋषभः। अजामुखे। स्यात्। गान्धारं गावो रम्भन्ति ध्वनन्ति। क्रौञ्चाः पक्षिविशेषाः। मध्यमं स्वरं ध्वनन्तीति शेषः॥ च एव तु पादपूरणे॥ ८॥

**कोकिलः पञ्चमं ब्रूते निषादं तु वदेद्गजः।**
**आश्वश्च धैवतो ज्ञेयः स्वराः सप्तेति[2] गीयते॥ ९॥**

कोकिलः कोयल इति प्रसिद्धः। पञ्चमं स्वरम्। ब्रूते। निषादं स्वरम्। गजो हस्ती। वदेत् ध्वनति। च पुनः। धैवतः स्वरः। आश्वः अश्वकृतः शब्दो ज्ञेयः। अश्वो धैवतं ध्वनतीति यावत्। सप्त स्वराः स-रि-ग-म-प-ध-नी संज्ञकाः। वेदे। इति एवम्। "गीयते" इत्येकवचनन्तु इति पद द्योत्यकर्माऽपेक्षया बोध्यम्। यथैते मयूरादयः षड्जादिसदृशध्वनीन्ध्वनन्ति तथैते षड्जादयः वेदे ध्वन्यन्ते इति भावः। एत च्च गानं सामवेदे। यजुषि तु कात्यायनेन प्रातिशाख्ये "सप्त सामसु गाने" "त्रीन् यजुर्मन्त्रेषु" "द्वौ यजुर्ब्राह्मणेषु" "एकम् शिक्षाद्यङ्गेषु यज्ञकर्मणि च" ( १।१२७-१३० ) इति विषयभेदस्योक्तत्वात्। तथात्रैव षष्ठे पद्ये त्रय एवेतिव्यवस्थापितत्वाच्च उदात्तादयस्त्रय एव स्वरा बोध्याः। नचजात्यादीनामष्टविधस्वराणामधिकानामपि पृथग्विधानाद्विरोधः शङ्कयः, तेषां स्वरितभेदेनैव गतार्थत्वात्। एवं प्रचयस्यापि स्वरिते गतार्थता "उच्चानुदात्तयोर्योग" इत्यादिना वर्णयिष्यते। ( या० शि० स्व० प्र० श्लो० ६० )॥ ९॥

अथ मात्राः—

**निमेषो[3] मात्राकालः स्याद्विद्युत्कालस्[4]तथा परे।**
**अक्षरात्तुल्[5]ययोगाच्च मतिः स्यात्सोमशर्मणः॥ १०॥**

निमेषोऽक्षिपक्ष्मप्रक्षेपोपलक्षितः कालः। मात्रायाः कालः समय इति तथोक्तः स्यात्। अथर्ववेदे मण्डूकसंमतोऽयं मात्राकालः—

---

१ मोज्ञेयो नि छ०। २ पतत्रिधीय छ०।
३ एकाला मात्रा स्या. ज०। ४ लेतिचां ग, च ज०। ५ रातुल्ययोगस्त्वान्म ग, च, ऋकस्वरा तुल्ययोगा वा म ज० ना० शि०।

"अक्ष्णो र्निमेषमात्रेण यो वर्णः समुदीर्यते। सपकमात्रो द्विस्तावान्दीर्घस्तु (?) प्लुत उच्यते" (मा० शि० १३६) इति। तथा परे आचार्याः। विद्युतः स्फुरणं तस्य कालः। तदुपलक्षितःकाल इत्यर्थः (शाकपार्थिवादिसमासः) अथवा विद्युत्पदेन विद्युत्स्फुरणं लक्ष्यते। मात्राकालः (इत्याहुरितिशेषः)। सोमशर्मणः तन्नामकाचार्यस्य। मतिः मतम्। च। त्वर्थेऽत्र चः। तुल्येन स्थानप्रयत्नाभ्यां सदृशेन योगः संबंधोऽस्त्यस्मिन् तस्मात् अक्षरात् वर्णं प्राप्य। अत्र अक्षरादिति तुल्ययोगादिति च ल्यब्लोपे पञ्चमी, तेनैकं व्यञ्जनमुच्चार्य अग्रे समानाक्षरयोगं प्राप्य यावान्मध्ये कालः स मात्राकालः इति फलितम्।

अत्र केनचित् 'अक्षरातुल्ययोगत्वादिति पाठं स्वीकृत्य अक्षराणां वर्णानाम् अतुल्ययोगत्वात् असमानसंबन्धा देकमात्राकालता भवतीत्यर्थो व्याख्यातः। स चोपेक्षितः। तदर्थस्य कुत्राऽप्यगृहीतत्वात्। तुल्याक्षरस्यैवाऽग्रे 'कुक्कुटः कामे- (या० शि० व० प्र० ६४) त्यादिनोदाहरिष्यमाणत्वाच्च। अत्राक्षरपदेन वर्णसामान्यग्रहणम्। अक्षरसमाम्नाय भाष्यात् (म. भा. १।१।२)। तुल्यग्रहणम् 'द्विवर्णमेकवर्णवद्धारणात् स्वरमध्ये समानपदे, (शु. य. प्रा. ४।१४२) इति कात्यायनोक्तस्थलीयोदाहरण प्रदर्शनार्थम्। यथा— व्यात्तम् (शु. य. सं. ३१।२२)। कुक्कुटः (शु.य.प. १।१६)। तुल्यग्रहणाभावे- भाज्यम् (शु. य. प. २।८)। अत्र द्वितीय जकारयकारयो र्योगमध्ये ऽल्पः कालः) महाभाष्ये तस्यार्ध मात्रिकोक्तेः। कात्यायनेन "द्विवर्णं स्वरमध्ये" इति पर्युदासत्वोक्ते र्मुखसंधारणाधिक्यविधानाभावाच्च। अतएव त्रिविधोऽपि मात्राकालः द्रुतादिवृत्तिषु व्यवस्थित इति नारदीय शिक्षाव्याख्यातु रुक्तिरपि संगच्छते। तथा हि मण्डूकश्च 'यथानुपूर्वं प्रथमा द्रुता पृश्निः प्रशस्यते। मध्यमैकान्तरावृत्ति द्व्यन्तराहि विलम्बिता, (माण्डूकी शि. १।२) इति।

सर्वसंमत मर्थं दर्शयति—

**सूर्यरश्मिप्रतीकाशा त्कणिका यत्र दृश्यते।**
**अणुंत्वस्य तु सा मात्रा मात्रा च चतुराणवा ॥११॥**

---

१ त्रिः शुद्धः। २ आणवस्य तु सा मात्रा मात्रा तु च इति ग०। सू० काशाकणि०। आणवस्य० त्रातु च इति च० चतुराणवी इति घ०।

यत्र ( गवाक्षप्रविष्टस्य ) सूर्यरश्मेः प्रतीकाशः प्रकाशः तं प्राप्येति ल्यबूलोपे पञ्चमी । कणिका सूक्ष्मं रजो दृश्यते सा अणुत्वस्य मात्रा परिमाणम् । अयमाशयः । यथा “ निमिषो मात्राकाल ” इत्यत्र निमेषपदेन अक्षिस्पन्दनकालो लक्ष्यते तथाऽत्राऽपि कणिकापदेन गवाक्षप्रविष्ट सूर्यकिरण सम्पर्कात्परिदृश्यमान सूक्ष्मरजःकणिकास्पन्दन कालोबोध्यः । यथा च वालुका घटिकायाम्-परिमिततावद्वालुका पातेन काल विशेषो बोध्यते । तथाऽत्र निरुक्तकणिकापातेनाणुकालो बोद्धव्य इति । तेनाऽत्राऽणुशब्देन वैशेषिक-पौराणिकाणुद्वार्थौ “तस्य षष्ठतमो भागः, “ तस्य त्रिंशत्तमो भाग इत्यादिरूपौ न ग्राह्यौ । अणो रिमानि परिमाणानि= आणवानि । चत्वारि आणवानि यस्यां सा चतुराणवा ( अनुपसर्जना दित्यधिकारादणन्तलक्षण ङीबभावः ) । मात्रा च मात्राकालस्तु चतुराणवोपलक्षितः काल इत्यर्थः । तथाच ‘व्यञ्जन मर्धमात्रा । तदर्धमणु । परमाणवर्धाऽणुमात्रे, ति शु० य० प्रातिशाख्यम् ( १।५९, ६०, ६१ ) । मूले प्रथमो मात्राशब्दः परिमाणसामान्यार्थः । द्वितीयस्त्वेकमात्राकालवाचकः ॥ ११ ॥

मात्रायां चतुराणवत्वं समर्थयति—

**मानसे चाणवं विद्या त्कण्ठे विद्याद् द्विराणवम् ।**
**त्रिराणवं तु जिह्वाग्रे निसृतं मात्रिकं विदुः ॥१२॥**

मानसे “आत्मा बुद्ध्या समेत्या ऽर्थान् मनो युङ्क्ते विवक्षया-” इत्यादि पा. शि. श्लो. ६-१० रीत्या विवक्ष्यमाणो वर्णो यदा मनसि समागच्छति तदा तम् वर्णम् आणवमणुपरिमाणमितं विद्यात् । यदा कण्ठे समागतो वर्ण स्तदा तम् द्विराणवम् विद्यात् । यदा तु जिह्वाया अग्रम् तस्मिन् संप्राप्त स्तदा तम् त्रिराणवं विद्यादित्यनुवर्त्तते । निसृतं मुखाद् वहिः प्राप्तं वर्णं मात्रिकम्= एकमात्राकालिकं विदुः, आचार्या इति शेषः । परा एकाणवा, पश्यन्ती द्व्याणवा, मध्यमा त्र्याणवा, वैखरी चतुराणवा इत्यर्थः । अतएव ‘न ह्यच मन्तरा व्यञ्जनस्यो च्चारणं संभवतीति महाभाष्योक्तावुच्चारणपदेन वैखरीवागुच्यते । द्विराणवपरिमिताया अर्धमात्रायाः मनस उत्थाय कण्ठे परिसमाप्तत्वा दितिभावः ) । अयं मात्राकालः स्वाभाविकः परस्परालापव्यवहारार्थः । वेदे पद्या-

त्मके लोके च ततोऽधिऽककालो बोध्यः 'चाषस्तु वदते मात्रामित्यादिना लोके वेदे च पाणिन्यादिना परिभाषितत्वात् ॥ १२ ॥

अधुना कुत्र कियान् विलम्बः करणीय इति नियम्यते—

अवग्रहे तु कालः स्यादर्धमात्रात्मको हि सः ।
पदयोरन्तरे काल एकमात्रा विधीयते ॥ १३ ॥

अवग्रहो नाम—पदपाठकाले समस्ताऽसमस्तस्य पदस्य प्रकृतिप्रदर्शनार्थं यो विच्छेदः सः । तत्र तु यः कालः स अर्धमात्रात्मकः स्यात् । यथा—सहस्रशीर्षेति सहस्र, शीर्षा ( शु० य० पद० ३१।१ ) । अत्र स्रोच्चारणान्ते अर्धमात्राविलम्बो विधेय एव । एवं तिष्ठन्त्वयऽइति तिष्ठत्, अयः ( शु० य० पद० १६।२३ ) । इत्यादौ । नन्वत्र विषये कात्यायनेन 'समासेऽवग्रहो ह्रस्वसमकालः' ( शु० य० प्रा० ५।१ ) इति मात्राकालविलम्ब उक्त अतो विरुद्ध इति चेत्, न । तस्य स्वाभाविकमात्राविधानपरत्वात् । अस्य च पारिभाषिकमात्राविधानपरत्वेनाऽविरोधात् । तेनाऽत्र "द्वयोस्तुस्वरयोर्मध्ये" ( या०शि०व०प्र० ६ ) इत्यादिलक्षितविवृत्तिवदेव श्रुतिर्भवति ॥

पदपाठकाले विशेषमाह—**पदयोरिति**। पदयोरन्तरे काले एकमात्रा विधीयते । पदान्यन्तरान्तरा एकमात्राया विलम्बः करणीय इति यावत् । यथा—गणानाम् । त्वा । गणपतिम् । (शु०य०सं० २३, १९) इत्यादिषु एकम्पदमुच्चार्य एकमात्रया विरम्यैव परस्य पदस्योच्चारणं क्रियते तदर्थमेका ऋजुरेखा ( । ) च विरामज्ञापनाय दीयते ॥ १३ ॥

मन्त्रावसाने विशेषमाह ।

ऋचोर्धे[2] तु द्विमात्रः स्यात्त्रिमात्रः स्यादृगन्तके ।
रिक्तन्तु पाणिमुत्क्षिप्य द्वे मात्रे धारयेद् बुधः ॥ १४ ॥

तत्र तावत् **मन्त्रमध्यावसाने** विशेषं दर्शयति **ऋचोर्धेत्विति**। ऋगिति कण्डिकोपलक्षणम् । अर्धमिति कण्डिकामध्यावसानोपल-

१ तु यः कालस्त्वर्धमात्रा विधीयते इति ग, च० । अव० त्राविधीयते इति घ० ।
२ ऋचार्द्धे० त्रः स्यादृचांतयोः । रि० प्य द्विमात्रे धा० च०, द्विमात्रे इति ग० "

क्षणम् । तेन ऋचोऽर्धे कण्डिकानां प्रत्यवसाने । द्वे मात्रे यस्मिन्नसौ द्विमात्रः कालः स्यात् । यथा—"गणानान्त्वा गणपतिᳯं हवामहे प्रियाणान्त्वा प्रियपतिᳯं हवामहे निधीनान्त्वा निधिपतिᳯं हवामहे वसो मम ॥ आहमजानि गर्भधमात्वमजासि गर्भधम् ( शु० य० सं० २३।१९ ) इत्यत्र ममेत्युच्चारणान्ते मात्राद्वयं विरम्यैव "आहमे-त्यग्रिमार्धस्योच्चारणं क्रियते । अत्र कण्डिकाऽवसानबोधस्तु शिक्षासंग्रहस्थ-पञ्चदशीययाऽवसाननिर्णय शिक्षया कर्त्तव्यः ।

मन्त्रान्ते विशेषमभिदधान आह " त्रिमात्रः स्यादिति—
ऋगन्तके कण्डिकान्त्यावसाने । तिस्रो मात्रा यस्मिन्नसौ त्रिमात्रः । कालः । स्यात् । यथा—गणाना॑० मम । आहम॑० गर्भधम् ( शु० य० सं० २३।१९ ) इत्यादौ कण्डिकान्त्यावसानगता-ऽर्धमात्रिक-व्यञ्जनमकारोच्चारणानन्तरं द्वयोरोष्ठ्ययोर्विग्रहं कृत्वा मात्रात्रयं विरम्यैवाऽग्रिमो मन्त्रः पठ्यते । द्विरोष्ठ्यविग्रहस्तु पाणिनिना " अनुस्वारे विवृत्यां तु विरामे चाक्षरद्वये " ( पा० शि० २४ ) इत्यादिना विहितः । अत्रैव परिशिष्टे सोदाहरणं व्याख्यास्यते चेयमस्माभिः । अतएव " गर्भधम् " इत्यत्राऽन्त्याऽर्द्धमात्रिकं मकारं तत्पूर्ववर्त्ति-धकारोत्तराऽकार-साहाय्येनोच्चार्य पुनरोष्ठ्ययोः

---

१ यत्र "नमो हिरण्यबाहवे....पुष्टानाम्पतये नमो [ मं: । १७ न ] नमो बभ्लुशाय ( शु० य० सं० १६।१७ ) इत्यादौ निरवसाना कण्डिका, परया युता भवति । तत्र परस्याः कण्डिकायाः " नमो बभ्लुशाय " ( शु० य० सं० १६।१८ ) इति नाम-ग्रहणं पुनर्न कर्त्तव्यम् । तथाहि—" पूर्वां च कण्डिकां दृष्ट्वा परया सह संयुताम् । तदेव नामग्रहणं न विकल्पः कदाचन " ( अमो० शि० ७२ ) इति । यदा च पूर्वामभ्यस्य परामधीते तदा " नमो बभ्लुशायेति प्रतीकमारभ्यैव तस्या अध्ययनम् । कण्डिका-यास्तदादिकाया एव विनियोगदर्शनात् । यथा—"नमो बभ्लुशाय व्याधिनेन्नानाम्प० ( शु० य० सं० १६।१८ ) इति । पारायणादौ तु पूर्वया सहैव परस्याः संहितां कृत्वा नामप्रतीकपुनरावृत्तिवर्जमध्ययनं विधेयम् । तथाहि-"पूर्वाविद्धा परस्या च कण्डिका यत्र दृश्यते । चपला चैव सा ज्ञेया "आच्छच्छन्दो ( शु० य० सं० १५।५ ) निदर्शनम्" ( अमो० शि० ७३ ) इति ।

स्थानकरणयोर्विश्लेषेण च तादृशस्यैव मकारस्योच्चारणम्—ऋग-न्तनियमेन मात्रात्रयकालपरिमितो विरामश्च भवति। एवं संकलनया एतादृशस्थले मात्राचतुष्टयकालः संलग्नः। तत एवाऽयमर्द्धमात्रिको मकारः सस्वर इवोच्चरितः प्रतीयते। ओष्ठयविश्लेषाभिप्रायेणैव कौमुदीकारोऽपि "पश्चिपीड्ढ्वम्" इत्यत्र "अनचि च" (पा० ८।४।४७) इति। मकारद्वयप्रक्रियां दर्शयामास। तथैव "सहस्रशीर्षा पुरुषः सहस्राक्षः सहस्रपात्" (शु० य० सं० ३१।१)। "सहस्तो...... रथ्यो न रश्मीन्" (शु० य० सं० ३४।४६। इत्यादिष्वपि अन्त्यार्धमात्रिकस्य द्विर्भूतस्योच्चारणानन्तरमोष्ठयोर्जिह्वादन्तमूलयो-र्विश्लेषेण च "पातृतूऽऽ" "रश्मीनून्ऽऽऽ" इत्थं सस्वरव्यञ्ज-नवत् भासमानाश्रुतिर्ज्ञेया। नतु वस्तुतः सस्वरतकारनकारौ पातऽऽ" रश्मीनऽऽऽ" इति ज्ञेयौ। यतोऽर्धया मात्रयाऽधिको विलम्बोऽत्र भवति। व्यञ्जने तु "पात्तूऽऽ" "रश्मीनून्ऽऽऽ" इत्यर्धया मात्रिकया न्यूनो विलम्बो भवति। इति महद्वैषम्यम्। व्यञ्जने तकारद्वयस्यैका मात्रा, विरामस्य च मात्राद्वयम्, सङ्कलनया मात्रात्रयम् संजातम्। सस्वर-व्यञ्जने तु तकारस्याऽर्धा, तदुत्तरह्रस्वाकारस्यैका, ततो विरामस्य द्वे मात्रे, एवं सार्धत्रिमात्रं निष्पन्नमिति भावः। अत्र शु. य. प्राति-शाख्यं च प्रमाणम् "स्पर्शान्तस्य स्थान करणविमोक्षः" (१।९०) इति प्रकस्य-"अवसाने च" (१।९१) इति। स्पर्शान्तस्य स्वरान्त-स्य चाऽवसाने स्थानकरणविमोकः कर्तव्यः स एव ओष्ठयोर्विश्लेषः इति पाणिनिना समानोऽर्थः इति सुज्ञैर्विज्ञयम्।

शून्यहस्ते (रिक्तपाणौ) विशेषमाह— रिक्तमिति। वुधो रिक्तम् वक्ष्यमाणलक्षणम्। पाणिम् दक्षिणकरम्। उत्क्षिप्य उत्थाप्य। द्वे। मात्रे (यावत्)। धारयेत्। यत्र स्थितं स्यात्तत्रैव स्थापय-न्नासीत नतु चालयेत् इत्यर्थः। यथा "षऽइमा" (शु.य.सं. १७।१०) इत्यत्र विवृत्तौ रिक्तपाणित्वस्यानुपदमेव वक्ष्यमाणत्वात् मात्राद्वय-विलम्बो विधेयः। तेन विवृत्तेः पूर्वस्वरानुसारी हस्तो यत्र उदात्ता-दिषु गच्छेत् तत्रैवं हस्तं मात्राद्वयं यावदवरुध्य मध्ये विवृत्तिं चाऽऽ-श्राव्याऽग्रिमस्वरानुसारी हस्तश्चालनीयः इति भावः। अयं च

रिक्तपाणिनिमित्तकः कालविशेषः अवग्रहादिविशेषनिमित्तककालविधिस्थलाऽतिरिक्तोत्सर्गस्थले एव ज्ञयः ॥ १४ ॥

रिक्तपाणित्वस्थलमाह—

[1]विवृत्तौ चावसाने च ऋचोऽर्द्धे च तथा परे।
पदे च पादसंस्थाने शून्यहस्तं विधीयते ॥ १५ ॥

विवृत्तौ "द्वयोस्तु स्वरयो (या. शि. व. प्र. ६) रिति वक्ष्यमाणायां "ऽ" खण्डाकारचिह्नितायाम्। अवसाने कण्डिकान्त्यावसाने। ऋचोऽर्द्धे कण्डिकामध्यावसाने। तथा परे अन्यस्मिन्विरामे। अवग्रहाऽनुस्वारविसर्गेषु इति यावत्। पदे पदपाठकाले। पूर्वं पदमुच्चार्य परस्मिन् पदे उच्चार्यमाणे माध्यमिको यो विरामस्तत्रेति यावत्। पादसंस्थाने पादपूर्त्तौ। शून्यहस्तं रिक्तपाणित्वम्। हस्तशब्दस्यार्धर्चादित्वात्क्लीवत्वम्। विधीयते (बुधैरिति शेषः) ॥ १ ॥

आनुषङ्गिकं रिक्तपाणित्वं नियम्य प्रकृतमेवाऽनुसरन् ह्रस्वादौ मात्रानियममाह—

एकमात्रो भवेद्ध्रस्वो द्विमात्रो दीर्घ उच्यते।
त्रिमात्रस्तु प्लुतो ज्ञेयो व्यञ्जनं चाऽर्धमात्रिकम् ॥१६॥

एकमात्रइति। ह्रस्वो वर्णः एकमात्रो भवेत्। दीर्घः द्विमात्रः उच्यते। बुधैरिति शेषः एवमुत्तरत्रापि। प्लुतस्तु त्रिमात्रो ज्ञेयः। व्यञ्जनं च अर्धमात्रिकम्। ज्ञेयमित्यावर्त्तते लिङ्गविपरिणामेन। ह्रस्वादिवर्णाः एकादिमात्रयोच्चारणीया इति भावः। ननु व्यञ्जनस्याऽर्धमात्रिकस्योच्चारणमसङ्गतम्, आणवद्वयमितायाा अर्धमात्रायाः कण्ठे परिसमाप्तत्वादिति चेत्, सत्यम्। स्वरवर्णसहितस्य व्यञ्जनस्य स्वराधिष्ठितमात्राकालापेक्षयाऽधिकयाऽर्धमात्रयोच्चारणं कर्त्तव्यमित्यभिप्रतत्वात्। जगदित्यादौ तु केवलस्य तकारस्य तत्पूर्ववर्तिगकारोत्तराऽकारसाहाय्येनोच्चारणम्भवति अतएव "नह्यचमन्तरा व्यञ्जनस्योच्चारणमपि सम्भवति—इति महाभाष्यकाराः ॥ १६ ॥

---

१ अत्र "एकमात्र, इति १६शीं पठित्वा एषा १५शी पठिता सर्वत्र ङाऽतिरिक्तेषु पु०॥

ओँकारादौ विशेषमाह—

**प्रणवं तु प्लुतं कुर्याद् व्याहृतीर्म्मात्रिका विदुः ॥**

प्रणवम् ओँकारम् । तु । प्लुतं त्रिमात्रम् । कुर्याद् उच्चरेद् । व्याहृतीः व्याहृतयः भूर्भुवः स्वरित्यादयः, एताः । मात्रिकाः एकमात्रान्तरिताः । विदुः । आचार्या इति शेषः । तथाहि—भूरित्येकां व्याहृतिं व्याहृत्य मध्ये एकमात्रया विरम्यैव परां भुवरिति व्याहृतिं व्याहरेत् । एवमुत्तरत्रापि ॥ ननु भूर्भुवःस्वरादीनां प्रत्येकं मिलित्वा वैकमात्रिकत्वम् ।

ननु वेदे कतमो मात्राभेदो ग्राह्य इति दृष्टान्तमिषेणाह—

**चाषस्तु वदते मात्रां द्विमात्रं वायसोऽब्रवीत ॥१७॥**
**शिखी वदाति त्रिमात्रं मात्राणामिति संस्थितिः ॥**

चाषो नीलकण्ठाभिधः पक्षी । मात्रां ह्रस्वमक्षरम् । वदते ब्रवीति । वदत इत्युपग्रहव्यत्यय आर्षत्वात् । वायसः काकः । द्विमात्रं दीर्घमक्षरम् । अब्रवीत् वदति (अब्रवीदिति भूते वर्त्तमानसामीप्ये प्रत्ययः) ॥१७॥ शिखी मयूरः पक्षी । त्रिमात्रं प्लुतमक्षरम् । वदति । इति एवम् । मात्राणाम् । संस्थितिः व्यवस्था । अस्माभिः कृतेति शेषः । यथा (१एक) इति संख्योच्चारणे यः कालविलम्बः स चाषोक्तो ग्राह्यः । { १, + २ । १ + १ }

इति द्वित्वसंख्योच्चारणे यावान् कालविलम्बो लगति स वायसोक्तौ मात्राद्वयकालः । यतो वायसशब्दानुकरणम् "काऽऽवँ"—इति । एतावति काले ( १ + २ ) इति द्वित्वसंख्याया अप्युच्चारणं सम्भवति । { १, + २, + ३ । १ + १ + १ } इति त्रित्वसंख्याया उच्चारणे यो विलम्बो लगति स मयूरोक्तः "पियाऽऽऽव" इति यः शब्दः तस्योच्चारणेऽपि लगति अयं मात्रात्रयकालः प्रत्येतव्यः ।

अथ वर्णादीनुपसंहरति—

**वर्णो जातिश्च मात्रा च गोत्रं छन्दश्च दैवतम् ॥१८॥**
**एतत्सर्वं समाख्यातं याज्ञवल्क्येन धीमता ।**

---

१ द्विमात्रां ग० । २ मयूरस्तु त्रिमात्रां वै ग० ॥

वर्णः शुक्ल इत्यादिः । जातिर्ब्राह्मणादिः । मात्रा ह्रस्वादिः । गोत्रं भारद्वाजादि । छन्दो गायत्र्यादि । दैवतम् अग्न्यादि । चकाराः समुच्चयार्थाः ॥ १८ ॥ एतत् पूर्वोक्तम् । सर्वं वर्णादि । धीमता तदभिज्ञेन । याज्ञवल्क्येन एतन्नामकेन मया । समाख्यातम् ( यतः—अविदितार्षेयच्छन्दो दैवतादिना मंत्रेण याजनाध्यापनादौ कर्तुर्निरयगामितोक्ता, अतः ) विविच्योक्तम् ।

इति श्री महर्षियोगिवरयाज्ञवल्क्यप्रोक्तायां शिक्षायां स्वरप्रकरणे दीक्षिताऽमरनाथशास्त्रिकृतायां शिक्षावल्ल्याख्यायां विवृतौ मात्राऽधिकारः ॥ १ ॥

## अथाऽध्ययनविधिः ॥

तत्र तावत् शरीराङ्गसंनिवेशप्रकारमाह—

### हस्तौ सुसंयतौ धार्यौ जानुनोरुपरि स्थितौ ॥ १९ ॥

उपस्थम् आसनविशेषम् विधाय । तस्यैवाऽत्र "पालथी" इति प्रचलितत्वात्, स्थिरसुखासनत्वाच्च । तथा हि—"दर्भाणां महदुपस्तीर्योपस्थं कृत्वा प्राङासीनः" तथा च-"दक्षिणोत्तरौ पाणी पादौ कृत्वा" ( तै० आ० २।११ ) इति । अत्र सायणभाष्यम्—दर्भाणां संबन्धि आसनमाऽऽस्तीर्य तस्योपर्युपस्थं कृत्वा । उपस्थशब्द आसनविशेषं ब्रूते 'आकुञ्चितस्य सव्यजानुन उपरि दक्षिणपादप्रक्षेपे सति यत्सुखावस्थानं भवति तत्कृत्वा'......दक्षिणपादोऽपि वामपादस्योपरि स्थापनीयः' इति । अमुमेवाऽर्द्धपद्ममित्याचक्षते योगविदः । एतच्च वामपादस्योपरि दक्षिणपादस्थापनं वामजङ्घाया

---

१ " एतान्यविदित्वा योऽधीतेऽनुब्रूते जपति जुहोति यजते याजयते तस्य ब्रह्म निर्वीर्य्यं यातयामं भवत्यथान्तराश्वगर्त्तं वाऽऽपद्यते स्थाणुं वर्च्छति प्रमीयते वा पापीयान् भवति " ( सर्वानुक्रमसूत्रे १।१ ) इति । किं च तत्रैव ऋष्यादिज्ञाने कात्यायनेन फलमपि प्रोक्तम्—" अथ विज्ञायैतानि योऽधीते तस्य वीर्य्यवदथ योऽर्थवित्तस्य वीर्य्यवत्तरं भवति जपित्वा हुत्वेष्ट्वा तत्फलेन युज्यते " ( सर्वानु. १।१ ) इति ।

२ तु···जान्वोरुपरिसंस्थितौ । किंचैतदर्धं "प्रणवं प्रागिति २२ मं वक्ष्यमाणं पूर्वं पठित्वा पठितम् ग० । जानुभ्यामुपरि......घ० ।

उपरि दक्षिणजङ्घाधरणेनैव संपद्यते। पादशब्देन गुल्फप्रभृतिजानु-पर्यन्तभागस्यापि ग्रहणात्। तेन—नखादिगुल्फान्तभागात्मकचरणं तु वामसक्थ्नोऽधस्तात् क्रियते, तदंशस्य जानुन उपरि दर्शने ग्रहणाऽध्ययनादिकर्मकालिक-**प्रौढपादत्वोक्त्या** शिष्टविगर्हणत्वा-पत्तेः। अध्यापनादिप्रयोजकव्यापारे जपात्मके ब्रह्मयज्ञे च यथाश्रु-ताऽवस्थानेन, न दोषः। विशेषानवगमात्, तथैव शिष्टसमाचाराच्च। अलमतिप्रपञ्चेन प्रकृतमनुसरामः। **हस्ताविति**— हस्तौ उभावपि करौ। जानुनोः जङ्घोरुसन्ध्योः। उपरि ऊर्ध्वप्रदेशे। स्थितौ धृतौ सन्तौ। सुसंयतौ वक्ष्यमाणरीत्या नियतौ। धार्यौ संस्थाप्यौ। यथा—वामोरौ वामकूर्परम्, दक्षिणोरौ वाममुष्टिं चाधःकृतकरभं निधाय, तत्र मुष्टौ दक्षिणकूर्परं धरणीयम्। उभयजानुस्थस्य वाम-करस्य मुष्ट्युपरि दक्षिणकूर्परनिधानेन दक्षिणकरस्यापि जानु-द्वयस्थत्वमर्थसिद्धम्। अतो द्वावपि करौ जानुनोरुपरि धृतौ स्याता-मिति भावः॥ १९॥

## गुरोरनुमतिं कुर्यात् पठन्नाऽन्यमतिर्भवेत्।
## ऊरुभागे तृतीये तु कूर्परं न्यस्य दक्षिणम्॥ २०॥

ननु ब्रह्मयज्ञे ( पारस्करगृह्यसूत्रे गदाधरभाष्ये २।६ ) गृह्यकारि-कायांविशेषः—"बद्धाञ्जलिर्दर्भपाणिः प्राङ्मुखस्तु कुशासनः। वामाङ्घ्रिमुत्तमं कृत्वा दक्षिणं तु तथा करम्। दक्षिणे जानुनि करोत्यञ्जलिन्तमृषेर्मतात्" इति यदञ्जलिनिधानम् कस्य चन मतमुक्तं तत् 'द्वितीये तु तथा भागे वेदाभ्यासो विधीयते। वेदाभ्यासो हि विप्राणां परमं तप उच्यते॥ ब्रह्मयज्ञः स विज्ञेयः षडङ्गसहितस्तु

---

१ ठे क० ख०। २ तु करंविन्य क०, ख०, घ० येऽधः करं न्यस्याथ द ग०, च०। ३ आश्वलायनगृह्य सू० "प्राग्वो० दर्भाणां महदुपस्तीर्य प्राक्कूलानां तेषु प्राङ्मुख उपविश्योपस्थम् ( उपस्थकरणे दक्षिणः पाद उत्तर इति तद्व्याख्या ) कृत्वा दक्षिणोत्तरौ पाणी संधाय पवित्रवन्तौ ( विज्ञा० ) द्यावापृथिव्योः सन्धिमीक्षमाणः संमील्य वा यथा वा युक्तमात्मानं मन्येत तथायुक्तोऽधीयीत स्वाध्यायम् ( अ० ३ खं० २ सू० २ ) इति विशेषः।

सः । वेदस्वीकरणम्पूर्वं १ विचारो २ऽभ्यसन ३ ञ्जपः ४ । तद्दानं चैव शिष्येभ्यो ५ वेदाभ्यासो हि पञ्चधा ॥ (दक्षस्मृ० अ० २ श्लो० २५-२७) इति पञ्चविधस्यापि (स्वाध्यायवाचि) ब्रह्मयज्ञोक्त्याऽत्रापि प्राप्तमपोद्यते-ऊरुभागे तृतीये त्विति—तु निश्चयेन । तृतीये । ऊरोः दक्षिणसक्थ्नो भागः अंशस्तस्मिन् ऊरुभागे, दक्षिणोरुतृतीयांशे इति यावत् । दक्षिणम् वामेतरम् । कूर्परम् प्रगण्डप्रकोष्ठयोः सन्धिम् "कोहिनी" इति भाषायां ख्यातं पूर्ववचनैकवाक्यतया वाममुष्टिस्थितम् । न्यस्य निधाय । गुरोः आचार्यस्य । अनुमतिम् अनुज्ञाम् । कुर्यात् प्रतीक्षेत । ( गुरुणाऽनुज्ञात एव पठेन्नाऽननुज्ञात इत्यर्थः ;। अधीयानेषुमध्ये तिष्ठन् दूरतो वा अन्योद्देशेनोपदिष्टमुपगृह्य नैव पठेदिति भावः ) तथा च मनुः 'ब्रह्म यस्त्वननुज्ञातमधीयानादवाप्नुयात् । स ब्रह्मस्तेयसंयुक्तो नरकं प्रतिपद्यते ( अ० २ श्लो० ११६ ) इति । अत एव गुरुं प्रति चाह स एव 'अध्येष्यमाणं तु गुरुर्नित्यकालमतन्द्रितः । अधीष्व भो इति ब्रूयाद् विरामोऽस्त्विति चारमेत्' ( मनु० अ० २ श्लो० ७३ ) इति । किंच । पठन् अधीयानः सन् । अन्यमतिः अध्ययनातिरिक्तमनस्कः । न । भवेत् । पठनसमये हस्तपादाद्यङ्गमोटनादिचापल्यं सहपाठिभिः सह वार्त्तालापादि-निषिद्धाचरणं न कुर्यात् इति भावः । यद्वा—पठन्निति भविष्यति लट् इति, अध्येष्यमाणो मन्वाद्युक्ताऽध्ययनविध्यनुष्ठानपरः सन्नित्यर्थः । तदुक्तम्—"अध्येष्यमाणस्त्वाचान्तो यथाशास्त्रमुदङ्मुखः । ब्रह्माञ्जलिकृतोऽध्याप्यो लघुवासा जितेन्द्रियः" ( म० २।७० ) इति । ब्रह्माञ्जलिस्तु—ब्रह्मारम्भेऽवसाने च पादौ ग्राह्यौ गुरोः सदा । संहत्य हस्तावध्येयं स हि ब्रह्माञ्जलिः स्मृतः" ( म० २।७१ ) इति ज्ञेयः । एषः "वेदारम्भे विशेषेण समाधौ च विशिष्यते । ब्रह्मयज्ञे च कार्या स्यात् सावित्रीग्रहणे तथा" इति कारिकोक्तकर्मसु नित्यं विधेयः । न च "ऊरुभागे तृतीयेत्त्विति । तथा । उत्तानं सोन्नतं किञ्चि (या० शि० स्व० प्र० ५१) दित्यादिना वक्ष्यमाणस्य च अध्ययनविध्युक्त-स्वरप्रदर्शक-हस्तचालनविधेः ब्रह्माञ्जलिकरणेन विरोधः शङ्क्यः । पौर्वापर्येणाऽविरोधात् । 'ब्रह्माञ्जलिकृतोऽध्याप्यः, इत्यनेन ब्रह्माञ्जलिकरणस्याऽध्ययनारम्भात् प्रागत्रगतेरित्यर्थः । एतेन जपात्मके ब्रह्मयज्ञे बद्धाञ्जलित्वविधानं गदाधरप्रदर्शितकारिकोक्तम्, एतस्मात् ब्रह्माञ्जलिकरणात् भिन्नं माध्यन्दिनातिरिक्तविषयं चेति दिक् । पादयोः स्पर्शनं चेदम् उत्तान-

पाणिभ्यां कार्यम् । यदाह पैठीनसिः-"उत्तानाभ्यां हस्ताभ्यां दक्षिणेन दक्षिणम् सव्यं सव्येन पादावभिवादयेत् । दक्षिणोपरिभावेन व्यत्यासो वार्यं शिष्टसमाचारात्" (म० स्मृ० कु० भा० २।७२) इति । किंच "गुरोः पादोपसंग्रहणं प्रातर्ब्रह्मानुवचने चाद्यन्तयोरनुज्ञात उपविशेत् । प्राङ्मुखो दक्षिणतः शिष्य उदङ्मुखो वा" । तथा । "चक्षुर्मनःप्राणोपस्पर्शनं दर्भैः प्राणायामास्त्रयः पञ्चदशमात्राः प्राक्कूलेष्वासनञ्च" ( गौ० स्मृ० १ ) इति । मनुश्च 'प्राक्कूलान्पर्युपासीनः पवित्रैश्चैव पावितः । प्राणायामैस्त्रिभिः पूतः' ( २।७५ ) इति । कूर्परनिधाने तदवच्छिन्नहस्ताकृतिस्तु मल्लशर्मकृतशिक्षया "उत्तानपाणिं फणवत् कृत्वा सह शलाकया" ( म० श० शि० ४ ) इति ज्ञेया ॥ २० ॥

एवं हस्तसंनिवेशं विधायाऽन्याङ्गसंनिवेशमाह—

सुप्रसन्नमना[1] भूत्वा किञ्चिन्नम्रस्त्वधोमुखः ॥
निवेश्य[2] दृष्टिं हस्ताग्रे शास्त्रार्थमनुचिन्तयेत् ॥ २१ ॥

सुष्ठु प्रसन्नं मनो यस्य स तथा । भूत्वा । किञ्चित् सामान्यतया । नम्रः पृष्ठवंशेनप्रह्वः । तु पुनः । अधोमुखः नतग्रीवश्च भूत्वा । येन हृदयोपलक्षितस्थानादुत्थितो हस्तो भ्रूपलक्षितस्थानं यावत् गच्छन् प्रादेशोद्देशगामी ( दशाङ्गुलप्रमाणाऽन्तरालयायी इत्यर्थः ) भवेदिति भावः । किंच । हस्ताग्रे फणाकृतिमदुत्तानपाण्याभिमुख्ये । दृष्टिं चक्षुर्व्यापारम् । निवेश्य संयोज्य । शास्त्रार्थम् वेदार्थं शिक्षाद्यङ्गमिति यावत् । अनुचिन्तयेत् शिक्षाद्युक्तयनुसार्यध्ययनमिच्छेदित्यर्थः ॥ २१ ॥

अथ शास्त्रार्थानुचिन्तनमेव व्याचष्टे—

प्रणवं[3] प्राक्प्रयुञ्जीत व्याहृतीस्तदनन्तरम् ।
सावित्रीं चानुपूर्व्येण ततो वेदान् समारभेत् ॥ २२ ॥

---

१ प्रसन्नमानसो भूत्वा किञ्चिन्निम्नमधोमुखम् क०, ख० । किंचिन्नम्रमधोमुखः ग० । चिन्निम्नैकदङ्मुखः च० । २ एतदुत्तरार्द्धम् २४मां कारिकां पठित्वा पठितम् ङातिरिक्तपुस्तकेषु । ३ एश साधाष्टादश्यनन्तरं पठिता ग० ॥

प्राक् वेदप्रथमाक्षरोच्चारणात्पूर्वम् । ( प्लुतं ) प्रणवम् ओङ्कारम् । प्रयुञ्जीत वदेत् । तदनन्तरम् प्रणवोच्चारणान्ते । व्याहृतीः ( कपिञ्जलन्यायेन भू–र्भुवः–स्वः इति व्याहृतयः तिस्रो ग्रहीतव्याः । वाजसनेयिसंहितायाः ३२ अध्यायस्थ–तृतीयकण्डिकायां व्याहृतित्रयस्यैव श्रवणाच्च । एतेन गोतमोक्ताः " व्याहृतयः पञ्च सप्तान्ताः " ( गो० स्मृ० १ ) इति शाखान्तरविषया द्रष्टव्याः ) ताः । प्रयुञ्जीत व्याहरेत् । च पुनः । सावित्रीम् 'तत्सवितुरिति सवितृदैवत्यां गायत्रीम् । आनुपूर्व्येण क्रमेण । व्याहृतिव्याहरणसमनन्तरमेवेति भावः । प्रयुञ्जीत समुच्चरेत् । ततः त्रिमात्रिकप्रणव–व्याहृतित्रय–गायत्रीपाठानन्तरम् । वेदान् अध्येष्यमाणानि वेदाक्षराणि । समारभेत् उपक्रमेत । परस्मैपदमार्षम् । एतच्च प्रणवोच्चारणम् " वेदे रामायणे चैव पुराणेषु च भारते । आदि-मध्या–ऽवसानेषु हरिः सर्वत्र गीयते " इति विनियुक्तस्य " हरिः " इति पदस्य उच्चारणं कृत्वा कर्त्तव्यम् । प्रणवादीनामपि वेदावयवत्वात् । ॐ ३ कारात् पूर्वं हरिरुच्चार्य इति भावः । यथा—' हरिः, ॐ ३, भू–र्भुवः स्व ÷ , तत्सवितुर्वरेण्यं भ०...यात् " इति पूर्वं पठित्वा पश्चात् वेदाक्षराणि 'इषेत्वोर्ज्जेत्वा वायवस्थेत्यादीनि समारभेत । किं च मध्यपदेनाऽत्र द्वितीयाद्यध्यायारम्भो विवक्षितः । तेन पाठादौ, पाठमध्ये ( प्रत्येकाऽध्यायारम्भे ), पाठावसाने च हरिःपदपूर्वकं प्रणवोच्चारणं फलितम् । तत्रापि पाठप्रारम्भे व्याहृतिसावित्र्योश्च समुच्चयः । इतरत्र न । मध्याऽवसानयोः व्याहृतिसावित्रीसमुच्चये मानाभावात् । प्रणवस्य तु–" ब्रह्मणः प्रणवं कुर्यादादावन्ते च सर्वदा । स्रवत्यनोङ्कृतं पूर्वं परस्ताच्च विशीर्यति " ( म० स्मृ० २।७४ ) इति विनियुक्तत्वात् " हरिः " इति पदेन समुच्चयो भवति । अत्र " अन्ते चेति । " परस्ताच्चेति च चकारौ मध्यार्थबोधकौ । तेन प्रत्येकाऽध्यायारम्भपरिग्रहः । एतदोङ्कारमक्षरं स्वाध्यायाद्यर्थं प्रयुक्तं परपदेन, न संदध्यात् । " न चैतत् संदध्यात् स्वाध्यायगतं परेण " ( ऋ० प्रा० पटलम् १५ सू० ७ ) इति स्मरणात् । यज्ञकर्मणि चोदितस्थलेऽनुवाक्यादिरूपे तु संदध्यात् । तत्र तत्र विशिष्य विधानात् । एवं व्याहृतीर्न संदध्यात् । तुल्यन्यायात् । पृथङ्मन्त्रत्वेन विनियुक्तत्वाच्च ॥ २२ ॥

सामान्येनाऽध्ययनविधिमुक्त्वा, इदानीं वर्णोच्चारणे विशेषकृत्यमाह—

**कूर्मोऽङ्गानीव संहृत्य चेष्टां दृष्टिं दृढं मनः ।**
**स्वस्थः प्रशान्तो निर्भीतो वर्णानुच्चारयेद्बुधः ॥२३॥**

कूर्मः कच्छपः । अङ्गानि इव यथा हस्त-पाद-मुख-पुच्छम् । संहृत्य अन्तः संकोच्य । स्वस्थः स्वसंपुटकस्थः । निर्भीतः भयशून्यः । प्रशान्तः शान्तमनाश्च सन् आस्ते इति शेषः । तद्वदध्येष्यमाणोऽपि । बुधः प्राज्ञः, अध्ययनविधिज्ञाता सन्नित्यर्थः । एतेन तद्विधिज्ञानमावश्यकम् इति सूचितम् । चेष्टाम् पूर्वोक्ताऽध्ययनविरोधिनं शरीरव्यापारम् । दृष्टिम् तथाविधनेत्रव्यापारम् । मनः चेतश्च । दृढं यथास्यात्तथा । संहृत्य एकाग्रीकृत्य, अध्ययनाऽनन्यमनस्कीभूयेत्यर्थः । स्वस्थत्वादि गुणवान् सन् । एभिः स्वस्थादिविशेषणैः कार्यान्तरव्यासङ्ग-स्वभावचापल्य-मानसोद्वेगानामध्ययनप्रत्यूहानां व्यावृत्तिः प्रदर्शिता । वर्णान् वेदाक्षराणि । उच्चारयेत् समुद्गिरेत् ॥ २३ ॥

अथ वर्णोच्चारणे ये दोषास्तान् निषेधति—

**नाऽभ्याहन्यान् न निर्हन्यान् न गायेन् नैव कम्पयेत् ॥**

न अभ्याहन्यात्, अभ्याहननम् वर्णव्यत्ययेनोच्चारणम्, तथा न कुर्यात् । न निर्हन्यात्, निर्हननम् स्थानाद्यन्यतमराहित्येनोच्चारणम्, तथा च न व्याहरेत् । न गायेत्, गानम् द्रुत-मध्य-विलम्बिताऽन्यतमायामपि नियतमात्राणां ह्रस्वादीनां गान्धर्वाभिरुच्या न्यूनाधिकमात्राभिः स्वरविशेषेण चोच्चारणम्, एवं नाभिदध्यात् । न कम्पयेत्, कम्पनम् स्वस्थानस्थमुच्चरन् ततः किंचिदन्यत्र करणं संचाल्य पुनस्तत्रैवोच्चारणम्, इत्थं न ब्रूयात् । यथा—' ऋचँव्वाचम् ' ( शु० य० सं० ३६।१ ) इत्यत्र "रेचमिति हनुमूलेनाऽनुच्चार्य जिह्वाग्रेणोच्चारणाद्वर्णव्यत्ययो जातः स च दोषः । तम्परिजिहीर्षेत् । यथा च—'सहस्रशीर्षा ( शु० य० सं० ३१।१ ) इत्यत्र 'शहस्रसीर्षेति दन्त्यस्य तालुना, तालव्यस्य दन्तैरुच्चारणे स्थानराहित्यम् । किञ्च 'व्वाचस्पतये (शु० य० सं० ७।१) इत्यत्र व्वाचस्पतए' इति प्रयत्नालपत्वा-

---

१ न च ग० ।

धकारलोपेनोच्चारणे प्रयत्नराहित्यम् । 'समिधाग्निम् ( शु० य० सं० ३।१ ) इत्यत्र 'समिदाग्नि' मिति सोष्म[1] ( महाप्राण ) धकार-स्थानेऽल्पप्राणतयोच्चारणे अनुप्रदानराहित्यम् । 'इषेत्त्वा ( शु० य० सं० १।१ ) इत्यत्र ' इषेत्त्वेत्येकमात्राकालिक-षकारोत्तरवर्त्येकारोच्चारणेन मात्रालोपतया कालराहित्यम् ( एचां ह्रस्वाभावात् द्विमात्रिकाणामेकमात्रिकतयोच्चारणेन परिमाणराहित्यमिति भावः । 'कृष्णोऽसि ( शु० य० सं० २।१ ) इत्यत्र 'कृष्णोसीति ककारोत्तर-वर्त्यृकारस्य स्वरितत्वविशिष्टतयोच्चारणात् स्वरराहित्यम् । ( राहित्यश्चात्र सतोऽतद्भावः ) । सर्वमेतन्निर्हननम् । तदपि त्यजेत् । गानन्तु प्रसिद्धमेव । कम्पो यथा 'तेजोऽसि ( शु० य० सं० २२।१ ) इत्यत्र 'तत्तत्तेजोसीति बद्धजिह्वत्वात् जिह्वाग्रस्य दन्तस्थानात् पुनःपुनःसंचलनेनोच्चारणे कम्पोनाम दोषोऽसावपि परिहर्त्तव्यः ॥ स्वरगतः कम्पो गानम् । व्यञ्जनगतस्तु कम्प एवेति भेदः ॥

किंच—

मन्त्रवर्णाः यया वृत्त्या येन सवनेन वा उच्चारयितुमारब्धाः तयैव ते समापनीया इत्युत्तरार्धेनऽऽह—

**यथाऽऽदावुच्चरेद्वर्णा स्तथैवैनान्[2] समापयेत् ॥ २४ ॥**

आदौ मन्त्रोच्चारणारम्भकाले । यथा यया वृत्त्या, येन सवनेन[3] वा ।

---

१ द्वितीयचतुर्थानाम् सोष्मसंज्ञा वर्गे वर्गे । तथाहि-"द्वितीयचतुर्थाः सोष्माणः" ( शु० य० प्रा० १।५४ ) इति ॥

२ ता ग० ॥

३ संवनं नाम—मन्द्र-मध्य-ताराऽपरपर्यायाः उरः-कण्ठ-शिरः स्थितवायुरूपाः स्वनविशेषाः । ते च प्रातरादिकालसंबन्धात्, तत्तत्काले जायमानाऽग्निष्टोमीय–सोमवल्ली-कुट्टन-विनियुक्त-मन्त्रसंबन्धाच्च, लक्षणया सवनपदवाच्याः ज्ञेयाः । तथाहि—"उरः कण्ठः शिरश्चैव स्थानानि त्रीणि वाङ्मये । सवनान्याहुरेतानि" ( ना० शि० १।७ ) इति ।

किंच—

"मारुतस्तूरसि चरन् मन्द्रं जनयति स्वरम् ।
प्रातःसवनयोगं तं छन्दोगायत्रमाश्रितम् ॥
कण्ठे माध्यन्दिनयुगं मध्यमं त्रैष्टुभानुगम् ।
तारं तार्त्तीयसवनं शीर्षण्यं जागतानुगम् ॥
प्रातः पठेन्नित्यमुरःस्थितेन स्वरेण शार्दूलरुतोपमेन ।

वर्णान् । उच्चरेत् पठितुमारभेत । तथैव तया द्रुतादिवृत्या, तेन मन्द्रादिसवनेनैव वा । एतान् मन्त्रगतवर्णान् । समापयेत् पठित्वोपसंहरेत् ॥ मन्त्रसमाप्तिं यावत् नान्यां वृत्तिं न वा अन्यं सवनं स्वीकुर्यादिति भावः ॥ २४ ॥

वर्णोच्चारणे मुखस्थानां वर्णानां यत्रोदात्तादिभागे स्थितिस्तत्रैव हस्तोऽपि धरणीय इत्याह—

**सममुच्चारयेद्वर्णान् हस्तेन च मुखेन च ॥**

**स्वरश्चैव तु हस्तश्च द्वावेतौ युगपत्स्थितौ ॥ २५ ॥**

वर्णान् ( मन्त्रगतान् ) । हस्तेन । मुखेन । च । समं सह । उच्चारयेत् । यतः । स्वरो मुखस्थ उदात्तादिः स्वरः । हस्तश्च तत्प्रदर्शनपरः करश्च । एतौ । द्वौ । युगपत् सह । स्थितौ । भवतः इति ऋषिभिः प्रोक्तमिति शेषः ॥ २५ ॥

स्वरहस्तयोर्वैषम्येण स्थितौ वेदाध्ययनफलाभावं प्रतिपादयति—

**हस्तभ्रष्टः स्वरभ्रष्टो न वेदफलमश्नुते ॥**

हस्तभ्रष्टः मुखस्थस्वरादन्यत्र हस्तचालनेन वैषम्यविशिष्टः । स्वरभ्रष्टः उदात्तादेः सतः स्वरस्य प्रदर्शनार्थं तत्र तत्र गतात्करादन्यत्र मुखेनोच्चारणात्स्वरभ्रंशविशिष्टः ( चेत्यनुवर्त्तते ) वेदफलम् वेदाध्ययनफलं चतुर्वर्गात्मकम् । न अश्नुते न प्राप्नोति । वेदाध्येतेति शेषः ।

एवं स्वरतो वर्णतो वा हीनो वेदः अध्ययनफलं पुरुषार्थचतुष्टयं दातुं न शक्तः इतिप्रतिपादितम् ।

तत्र के ? के ? पुरुषाः वर्णानुच्चारयितुमसमर्थाः इत्याह—

**न करालो न लम्बोष्ठो नाऽव्यक्तो नाऽनुनासिकः ॥२६॥**

**गद्गदो बद्धजिह्वश्च न वर्णान् वक्तुमर्हति ॥**

---

मध्यन्दिने कण्ठगतेन चैव चक्राह्व-संकूजित-संनिभेन ॥
तारं तु विद्यात् सवनं तृतीयं शिरोगतं तच्च सदा प्रयोज्यम् ॥
मयूर-हंसा-ऽन्यभृतस्वराणां तुल्येन नादेन शिरःस्थितेन" ॥
( पा० शि० श्लो० ७–८।३६–३७ ) इति ।
अत्र जनिर्विपरिणमनार्थः ॥

करालः दन्तुरः । "करालो दन्तुरे तुङ्ग इत्यमरात् । उन्नतदन्त इत्यर्थः । न वर्णान् वक्तुमर्हतीत्यपकर्षः । एवमुत्तरत्रापि । तथा–। न । लम्बोष्ठः विकृतोष्ठयुक्तः । एवम्–। न । अव्यक्तः अनुद्भूतेन्द्रियकः, मूर्खो वा । "अव्यक्तः । पुं० । हरौ । स्मरहरे । ......मूर्खे ।...... सांख्योक्तमहदादौ ।" इति शब्दार्थचिन्तामण्याम् उक्तत्वात् । न च । अनुनासिकः नासारोगी । गद्गदः महाप्राणादीनां कण्ठ्यताल-व्यादीनां च प्रयत्न-स्थानविशेषोच्चार्याणां वर्णानां तत्तत्स्थान-प्रय-त्नाभ्यामुच्चारणेऽशक्त्याऽन्यथाऽल्पप्राणत्वेन दन्त्यादिना चोच्चारयिता **तोतला** इति प्रसिद्धः । बद्धजिह्वः मध्ये मध्ये विरम्य विरम्यो-च्चारयिता, स्खलद्वचनो वा । **हक्ला** इति ख्यातः । एते सर्वे वर्णान् यथास्वरं यथास्थानं वक्तुं न शक्नुवन्तीत्यर्थः । गद्गद-बद्ध-जिह्वयोः करालादिभ्यः पृथग्वचनेन औषधपानादिना निवृत्तरोगस्य कदाचिदध्ययनेऽधिकारिताऽपि स्यादिति सूचितम् । चकारः समुच्चयार्थः ॥

तर्हि वर्णोच्चारणे कः समर्थ इत्याह—

**प्रकृतिर्यस्य कल्याणी दन्तोष्ठौ यस्य शोभनौ ॥२७॥**
**प्रगल्भश्च[1] विनीतश्च स वर्णान् वक्तुमर्हति ॥**

प्रकृतिः प्रतिकृतिः शरीरमिति यावत् । यस्य शिष्यस्य । कल्याणी सर्वावयवेन सुन्दरा । अस्तीति शेषः । "यत्राकृतिस्तत्र गुणा वसन्ति" इति सामुद्रिकोक्तेः । यद्वा । प्रकृतिः स्वभावः, शील-मिति यावत् । तस्याः शोभनत्वम् श्रद्धया यथावदुपदेशग्राहित्वम् । एतेन क्रोधाऽविश्वासादिराहित्यमावश्यकमिति व्यज्यते । अतः पृथक् दन्तौष्ठस्य शोभनत्वकथनं संगच्छते। अन्यथा शोभनाकृतित्वेनैव संगृहीतं स्यात् । यस्य च । दन्तोष्ठौ । शोभनौ निर्विकारौ । स्तः इति शेषः । द्विवचनमत्र प्रत्येकं जात्यभिप्रायेणेति बोध्यम् । शरीरार्थक प्रकृतिग्रहणपक्षे पूर्वविशेषणेनैवैतल्लाभे पुनरुपादानम् दन्तोष्ठनिर्वि-कारत्वमतीवोपयुज्यते इति भावः ॥ २७ ॥ च पुनः । यः प्रगल्भः अग्रेऽग्रे वक्तुमुत्सहमानः, श्रुतग्राही च । च पुनः । विनीतः जिते-

---

१ एतदर्धं नास्ति घ० ॥

न्द्रियत्वादिगुणविशिष्टः। स शिष्यः । वर्णान् । वक्तुम् उच्चारयितुम् । अर्हति समर्थो भवति ॥

इत्थं वर्णाभ्याहननादि यन्निषिद्धं तत्र पाणिनिनारदादिसम्मतिमपि दर्शयन् तदुक्तदोषसंग्राहकद्दोषचतुर्दशीमाह—

**शङ्कितं भीतमुद्घृष्टमव्यक्तमनुनासिकम् ॥ २८ ॥**

**काकस्वरं मूर्द्धिगतं तथा स्थानविवर्जितम् ॥**

**विस्वरं विरसं चैव विश्लिष्टं विषमाहतम् ॥ २९ ॥**

**व्याकुलं तालहीनं च पाठदोषाश्चतुर्दश ॥**

शङ्कितमिति द्वाभ्याम् । किमयमोकारो वा उकार इति यत्र संदेहस्तत् शङ्कितम् (१) । भीतम् अम्बूकृतम् (व्यक्तमप्यन्तर्मुखमिव भयाच्छ्रूयते यत्तदिति यावत् ) ( २ ) । उद्घृष्टम् संदष्टम् ( यद्धर्षितमिव श्रूयते रोषादिना तदित्यर्थः ) ( ३ ) । अव्यक्तम् ग्रस्तम ( स्फुटतयाऽनुच्चारितमिति भावः) ( ४ ) । अनुनासिकम् निरनुनासिकमपि यन्नासायामुच्चारितम् ( ५ ) । यथा 'त्वँष्ठंविष्ठदाशुषेोन्नॄँ ÷ ?पांहि ( शु० य० सं० १३।५२ ) इत्यादौ विसर्जनीयादेः । काकस्वरम् कण्ठं निष्पीड्योच्चैरुच्चारितम् ( ६ ) । मूर्ध्निगतम् अपरिपूर्णमत्युच्चैः प्रभाषितम् ( ७ ) । तथा एवम् । स्थानविवर्जितम् ( कलम् स्थानान्तरनिष्पन्नवर्णोच्चारितमितियावत् ) ( ८ ) । विस्वरम् मन्द्रादिरहितं षड्जादिरहितम् उदात्तादिहीनं च ( ९ ) । विरसम् माधुर्यादिरहितम् यद्वा निहतम् रूक्षमिति यावत् ( १० ) । चकारः समुच्चयार्थः । एवकारस्तु नियोगार्थो भिन्नक्रमश्च । विश्लिष्टम् हन्वोः 'प्रकर्षणे तद्‌ विक्लिष्टमाहुः' ( ऋ० प्रा. प. १४। सू. ४ ) प्रकर्षणं सर्वतश्चलनम् । इति व्याख्यातम् । प्राणसंहितात्यागाद्विच्छिद्योक्तम् इत्यर्थः । यद्वा विकीर्णम् वर्णान्तरे प्रसृतमिति यावत् ( ११ ) । विषमाहतम् ह्रस्वो ध्मातो दीर्घायितः, दीर्घप्लुतौ चार्द्धकौ ह्रस्वायितौ इति यत् तदयथामात्रं वचनं स्वराणाम् ( १२ ) । व्याकुलम् चित्तविक्षेपादिना वर्णस्वरादीनां वैषम्येणोच्चारणम् ( १३ ) । तालहीनम् द्रुतादिवृत्तिषु विहितमात्रात्यागात् यतिरहितम् ( १४ ) । चकारः

समुच्चयार्थः । इत्थम् । चतुर्दश एतत्संख्याकाः । पाठे ऽध्ययने दोषा विकारास्ते । भवन्तीति शेषः । अतस्त्याज्या इति भावः । अन्येऽपीतरत्रप्रोक्ता दोषा एष्वेवान्तर्हिता ज्ञेया इति चतुर्दशपदेन सूचितम्भवति ॥ २८ ॥ २९ ॥

वर्णदोषानुक्त्वा इदानीम् त्रिपदसंहिताऽध्ययनं दुस्तर-वारिराशि-तरणमिव मनोऽवधानपूर्वकं पुनः पुनरभ्यासेन पद-क्रमसन्धिविवेक पोतैरेव सुसम्पादमिति रूपकेण दर्शयति—

**संहितासार[1]बहुलः पदसंज्ञासमाकुलः ॥ ३० ॥**
**क्रमसन्धिसमाकीर्णो दुस्तरो मन्त्रसागरः ॥**

संहिता ऋग्यजुःसामात्मिकाऽऽर्षी । सैव सारः रत्नम् । तेन बहुलः प्राज्यः, प्रचुर इति यावत् । सः । अधिकाधिकसंहितायुतो मन्त्र-पाठात्मकः । सम्यक् ज्ञायन्ते आभिरिति संज्ञाः । पदान्येव संज्ञाः अर्थज्ञानसाधनानि । ताभिः समाकुलः व्याप्तः । सः । पदपाठेन च युतः ॥ ३० ॥ सन्धीयन्ते संयुज्यन्ते पदानि यत्र स सन्धिः । क्रम एव संधिः " द्वे द्वे पदे संदधात्युत्तरेणोत्तरमाऽवसानादपृक्तवर्जम् " ( शु० य० प्रा० ४।१८२ ) इत्यादिरूपः । तेन समाकीर्णः युक्तः । सः । क्रमपाठेन च सहितः । अत एव । मन्त्र एव सागरः । मन्त्रात्मक-समुद्र इत्यर्थः । दुस्तरः दुःखेन तरितुं शक्यः । सागरपक्षे—सारो रत्नम् । संज्ञा जलजन्तवो ग्राहादयः । सन्धिर्जलभ्रमिः इति ज्ञेयम् ॥

अधुनाऽध्ययनफलं दर्शयति—

**ऋक्संहितां त्रिरभ्यस्य यजुषां वा समाहितः ॥ ३१ ॥**
**साम्नां वा सरहस्यां च सर्वपापैः प्रमुच्यते ॥**

मर्त्यः इति आक्षिप्यते । समाहितः एकाग्रचित्तः सन् । ऋक्संहिताम् । वा । यजुषाम् । वा । साम्नाम् । संहिताम् । सरहस्याम् साभिप्रायाम्, अर्थज्ञानपूर्विकाम् इति यावत् । यद्वा । सकल्पामित्यर्थः 'कामं तु याज्ञिकस्य, ( पा० गृ० सू० २।६।८ ) इति यज्ञं वेदेति याज्ञिकः । तस्य कामं स्नानं भवति । तुकारः षडङ्गमर्थतोऽनधिगत-

---

१ स्वारब...संज्ञाभिराकु ग० ।

स्यापि स्नानविधायकः । अथवा रहस्यशब्द उपनिषद्वाचकः । तेन उपनिषत्प्रतिपादकब्राह्मणभागसहितामित्यर्थः । चकारात् "वेदाऽथर्वपुराणानि सेतिहासानि शक्तितः । जपयज्ञप्रसिद्ध्यर्थं विद्यां चाऽऽध्यात्मिकीं जपेत्" (या० स्मृ० १।१०१) इत्युक्तानि समुच्चीयन्ते । तेनाऽत्र विधिरूप-ब्राह्मणभागात्मकवेदांशस्य अथर्वपुराणेतिहासानामपि संग्रहः । "विधिर्विधेयस्तर्कश्च वेदः" (पा० गृ० सू० २।६।५) विधिः विधायकवाक्यात्मकं ब्राह्मणम् । विधेयः मन्त्राः । तर्कः अर्थवादरूपं ब्राह्मणम् । केषाञ्चिन्मते उपनिषदपि गृह्यते । इति विध्यर्थवादात्मकब्राह्मणभागसहितानां मन्त्राणां वेदशब्दवाच्यत्वात् । मन्त्रोपनिषद्रूपयोः स्वरूपतो गृहीतत्वाच्च ब्राह्मणभाग एव शिष्टो वेदार्थः चकारेण गृह्यते इति भावः । त्रिः त्रिवारम् । आर्षी (मन्त्रात्मिका) पद-क्रमपाठरूपेणेत्यर्थः । अभ्यस्य वेदस्वीकरणादिपञ्चसु दक्षोक्तेषु अन्यतमं वेदाभ्यासं कृत्वा । सर्वपापैः रहस्यैः अज्ञानप्रमादजैः महापातकादिभिः । प्रमुच्यते शुद्धो भवति । तदाह—"वेदाभ्यासरतं क्षान्तं पञ्चयज्ञक्रियान्वितम् । न स्पृशन्तीह पापानि महापातकजान्यपि" (या० स्मृ० ३।३१) इति याज्ञवल्कीयव्याख्यायां विज्ञानेश्वरः—"एतच्चाऽकामकारविषयम् । अत एव वसिष्ठेन । 'यद्यकार्यशतं साग्रं कृतं वेदश्च धार्यते । सर्वं तत् तस्य वेदाग्निर्दहत्यग्निरिवेन्धनमिति प्रकीर्णकाभिप्रायेणाभिधायाभिहितम् । 'न वेदबलमाश्रित्य पापकर्मरतिर्भवेत् । अज्ञानाच्च प्रमादाच्च दह्यते

---

१ उपनिषदां कर्मणोऽर्थवादरूपत्वात् । अयम्भावः । 'आम्नायस्य क्रियार्थत्वादानर्थक्यमतदर्थानाम्—(जै० सू० ५।२।५) इति सिद्धब्रह्मप्रतिपादकानां वेदान्तानामानर्थक्यं माभूदिति कर्तृ-देवतादिप्रकाशनार्थत्वेन प्ररोचनार्थप्रशंसापरत्वेन वा (क्रिया) कर्मविधिशेषत्वेनार्थवादतोपनिषदां पूर्वमीमांसकैर्व्यवस्थापिता । तथा—"प्रवृत्तिर्वा निवृत्तिर्वा नित्येन कृतकेन वा । पुंसां येनोपदिश्येत तच्छास्त्रमभिधीयते" इति । ब्रह्ममीमांसकास्तु 'ब्रह्मात्मताऽवगमादेव सर्वक्लेशप्रहाणात् पुरुषार्थसिद्धेः परिनिष्ठित-भूत-ब्रह्मप्रतिपादक उपनिषद्भागः स्वत एव प्रमाणम् । न तु कार्यविधिशेषतयेति वेदान्तता वेदचरमावधिरुपनिषदां सिद्ध्यतीति वदन्ति । यद्यपि केषां चनोपनिषत्स्वर्थवादता नेष्टा तथापि विध्यात्मकब्राह्मणत्वेन तासु वेदत्वमविरुद्धमेव तन्मतेऽपि । याज्ञवल्कीयवचने वेदातिरिक्तत्वेनाऽऽध्यात्मविद्यायाः पृथग्जपविधानं तु तस्या आवश्यकत्वसूचनार्थम् । सर्वंजपाऽशक्तो अस्या जपोऽवश्यं विधेय इत्यर्थः ॥

कर्म नेतरत्' इति । ज्ञानपूर्वकमहापातकादिविषयकं वचनान्तरं तु पृथगुक्तम् स्मृत्यादिषु द्रष्टव्यम् ॥

अधुना संहितादिष्वेकैकपाठधारणफलान्याह—

**संहिता नयते सूर्यं पदं[1] च शशिनः पदम् ॥ ३२ ॥**
**क्रमश्च[2] नयते सूक्ष्मं यत्[3] तत् पदमनामयम् ॥**

संहिता केवला आर्षी तदभ्यासरतं नरमिति;शेषः । एवमुत्तरत्रापि । सूर्यम् आदित्यलोकम् । नयते । पदम् पदपाठः । तेषामेव मन्त्राणामिति शेषः । एवमग्रेऽपि । शशिनः चन्द्रस्य । पदम् लोकम् । नयते । चकारः क्रियासमुच्चायकः । च तथा । क्रमः पूर्वोत्तरपदयोः कृतसन्धिपाठः । यत् । अनामयम् अविकृतम् । शुद्धमिति यावत् । तत् । सूक्ष्मम् ब्रह्मात्मकम् । पदम् स्वरूपम् । नयते गमयति । पापक्षयात् तत्परस्य चित्तशुद्ध्यादिना मुक्तिरेवेति भावः । सूर्यचन्द्रलोकादि क्रमेण फलप्रदर्शनम् पूर्वम् संहितापाठः, ततः पदपाठः, ततः क्रमपाठोऽभ्यसनीय इति क्रमनियमं सूचयति ॥

किञ्च—

**कालिन्दी[4] संहिता ज्ञेया पदमुक्ता[5] सरस्वती ॥ ३३ ॥**
**क्रमेणाऽऽवर्त्तिता[6] गङ्गा शम्भोर्वाणी तु नाऽन्यथा ॥**

संहिता आर्षी । कालिन्दी यमुना । ज्ञेया । बुधैरिति शेषः । संहितापाठेन यमुनास्नानजन्यं फलं भवतीत्याशयः । पदम् पदपाठः । सरस्वती सरस्वतीनदी । उक्ता कथिता । मुनिभिरिति शेषः ॥ पदपाठेन सरस्वतीनद्यवगाहनोत्थं पुण्यमुत्पद्यते इत्यर्थः । क्रमेण क्रमपाठेन । गङ्गा सुरनदी । आवर्तिता अवगाहिता । उक्तेतिपूर्वतोऽनुवर्त्तते । क्रमपाठकस्य गङ्गास्नानजन्यं फलं मुक्तिरूपं प्राप्यते इतिभावः । शम्भोः ईश्वरस्य । वाणी वेदरूपा वाक् । तु पुनः । अन्यथा व्यर्था । न नहि । अर्थात् संहिताऽऽदिभिस्त्रिवृतो वेदः प्रयागराजवत् संहिता-पद-क्रमपाठकर्तुर्गङ्गायमुना-सरस्वतीरूप-त्रिवेणीस्नातस्येव मुक्तिं ददात्येव ॥

---

१ दानि श ग० ॥ २ मोऽपि न ग० ॥ ३ यच्चैतन्यमना च० ॥
४ ( एतत्पद्यद्वयं नास्ति ) च० ॥ ५ दयु ग, घ० ॥ ६ तंयेद् ग, घ० ॥

तदेव स्पष्टयति—

**यथा महाह्रदं प्राप्य क्षिप्तो लोष्टो विनश्यति ॥ ३४ ॥
एवं दुश्चरितं सर्वं वेदे त्रिवृति मज्जति ॥**

यथा येन प्रकारेण । केन चित् । क्षिप्तः प्रक्षिप्तः । लोष्टः मृत्तिकाखण्डः । महाह्रदम् बृहत्सरः । प्राप्य गत्वा । विनश्यति नष्टो भवति । अत्र ह्रदस्य महत्वोक्त्या प्रक्षिप्तस्य लोष्टस्य अन्वेषणेनापि प्राप्तिर्दुःशकेति सादृश्यं सूचितम् न तु सर्वात्मना दृष्टान्तता-दुश्चरितं तु वेदजलधौ मग्नं सत् सर्वथा नश्यत्येवेतिबोध्यम् ॥ ३४ ॥ एवम् । सर्वम् । दुश्चरितम् पापम् । त्रिवृति संहिता-पद-क्रमरूपेण त्रिरावृत्ते । वेदे । मज्जति लीनं भवति ॥

अथ वर्णोच्चारणे साहाय्यप्रदानि बाह्यानि कर्तव्यानि दर्शयति—

**आम्रपालाशबिल्वानामपामार्गशिरीषयोः ॥३५॥
वाग्यतः प्रातरुत्थाय भक्षयेद्दन्तधावनम् ॥**

प्रातः उषसि रात्रेः पश्चिमयामात्मके ब्राह्मे मुहूर्त्ते इति यावत् । उत्थाय निद्रातः प्रबुध्याऽऽह्निकविधिना आत्महितचिन्तनपुरःसरं शय्यातउत्थायाऽऽवश्यकमूत्रपुरीषेचोत्सृज्य, शौचं विधाय । वेदं कृत्वा वेदिं करोतीतिवत् । स्नानात् प्राक् । तथाहि मनु-दक्ष-याज्ञवल्क्य-हारीताः क्रमेण-'ब्राह्मे मुहूर्त्ते बुध्येत धर्मार्थौ चानुचिन्तयेत् । कायक्लेशाँश्च तन्मूलान्वेदतत्वार्थमेव च ॥ उत्थायाऽऽवश्यकं कृत्वा कृतशौचः समाहितः' ( म० स्मृ० ४।९२, ९३ ) । 'प्रदोषपश्चिमौ यामौ वेदाभ्यासेन तौ नयेत् । प्रहरद्वयं शयानो हि ब्रह्मभूयाय कल्पते' ( द० स्मृ० २।५५ ) । 'ब्राह्मे मुहूर्त्ते चोत्थाय चिन्तयेदात्मनो हितम् (या० स्मृ० १।११५) 'स्नानं कार्यं ततो नित्यं दन्तधावनपूर्वकम् । उषःकाले समुत्थाय कृतशौचो यथाविधि' (ल० हा० स्मृ० ४।४,५) इति । आम्रश्च पालाशश्च बिल्वश्च तेषाम् । अपामार्गश्च शिरीषश्च तयोः । आम्रादिशिरीषान्तानां वृक्षाणामन्यतमसंबन्धीत्यर्थः । दन्ताः धाव्यन्ते

१ नि ग० ॥ २ आम । पलास ( ढाक ) । बेल । चिचड़ा ( ऊंगा ) । सिरीस । इति भाषायां ख्याताः ॥

अनेन तद्दन्तधावनम् दशनशोधककाष्ठम् । शुद्धयर्थकधावधातोः करणेल्युडन्तमिदम् । वाग्यतः मौनी सन् । भक्षयेत् स्मृत्यन्तरोक्त-विधिना चर्वेत् । तथाहि विज्ञानेश्वरः-'दन्तधावनविधिश्च । "कण्ट-कक्षीरवृक्षोत्थं द्वादशाङ्गुलसंमितम् । कनिष्ठिकाग्रवत्स्थूलं पर्वार्धकृत-कूर्चकम् ॥ दन्तधावनमुद्दिष्टं जिह्वोल्लेखनिका तथा" इति । अत्र वृक्षोत्थमित्यनेन तृणलोष्टाङ्गुल्यादिनिषेधः पलाशाश्वत्थादिनिषेधश्च स्मृत्यन्तरोक्तो द्रष्टव्यः । दन्तधावनमन्त्रश्च 'आयुर्बलं यशो वर्चः प्रजाः पशुवसूनि च । ब्रह्म प्रज्ञां च मेधां च त्वं नो देहि वनस्पते' ( या० स्मृ० मिता० १।९८ ) इति । किञ्च । इत्थं संप्रार्थ्य 'औदु-म्बरेण दन्तान्धावेत । ॐ अन्नाद्याय व्यूहध्वꣳ सोमो राजायमागमत् । समे मुखं प्रमार्क्ष्यते यशसा च भगेन च' ( पा० गृ० सू० २।६।१७ ) इति मन्त्रेण धावनम् । 'दन्तप्रक्षालनादीनि नित्यमपीति (पा० गृ० सू० २।६।३२) वचनात् ॥

किञ्च खदिरादिवृक्षा अपि दन्तधावने ग्राह्या इत्यत आह—

**खदिरश्च कदम्बश्च करवीर-करञ्जकौ ॥ ३६ ॥**
**सर्वे कण्टकिनः पुण्याः क्षीरिणश्च यशस्विनः ॥**

खदिरः । च पुनः । कदम्बः । च पुनः । करवीरश्च करञ्जकश्च तौ ( करञ्ज एव करञ्जकः ) ॥ सर्वे निषिद्धेतरा खदिरादिव्यति-रिक्ता अन्ये च कण्टकिक्षीरिवृक्षाः । दन्तशोधने संग्राह्याः । यतः । कण्टकाः सन्ति येषु ते कण्टकिनो वृक्षाः । पुण्याः पुण्यजनकाः । च पुनः । येषु क्षीरम् दुग्धमस्ति ते क्षीरिणो द्रुमाः । यशस्विनः यशःप्रदाः । सन्तीति शेषः । तेनाऽऽम्रादिषु कण्टकिक्षीरिवृक्षनाम-ग्रहणं प्रपञ्चार्थम् । पालाशग्रहणं च षोडशीग्रहणाऽग्रहणवद्विक-ल्पार्थम् ज्ञेयम् ॥ तथाहि विष्णुस्मृतौ 'अथ पालाशं दन्तधावनं नाद्यात् । नैव श्लेष्मातकारिष्टविभीतकधववधन्वनजम् । न च बन्धूकनिर्गुण्डीशिग्रुतिल्वतिन्दुकजम् । न कोविदारेत्यादि निषिध्य । अद्याच्चोदङ्मुखः प्राङ्मुखो वा । वटाऽसनाऽर्क खदिर कर-ञ्जबदरसर्ज्जनिम्बाऽरिमेदाऽपामार्गमालतीककुभविल्वानामन्यतमम् । कषायं तिक्तं कटुकञ्च । कनीन्यग्रसमस्थौल्यं सकूर्चं द्वादशाङ्गुलम् ।

---

१ एते क० ख० ग० घ० । खैर । कदम । कनैल (र) । करंज । इति भाषायां ख्याताः ।

प्रातर्भूत्वा च यतवाक् भक्षयेद्दन्तधावनम् । प्रक्षाल्य भङ्क्त्वा तज्जह्याच्छुचौ देशे प्रयत्नतः । अमावास्यां न चाश्नीयाद्दन्तकाष्ठं कदाचन' (वि० स्मृ० अ० ६१) इति । काष्ठभङ्गस्तु जिह्वोल्लेखनादनन्तरं कार्यः । काष्ठान्तराऽश्रुतेः । अमावास्याग्रहणं स्मृत्यन्तरोक्तनिषिद्धकालोपलक्षणम् ॥

एतेन प्रकृते किमायातमित्याह—

**तेनाऽस्य करणे[1] सौक्ष्म्यं माधुर्यं चैव जायते ॥ ३७ ॥**

तेन दन्तधावनेन । अस्य शिष्यस्य । करणे कण्ठादिस्थानात्मके वागिन्द्रियात्मके च वर्णोच्चारणसाधने । सौक्ष्म्यं सूक्ष्मताम् । च पुनः । माधुर्यं मधुरताम् । एव निश्चितम् । जायते भवति । अत्र केचन आस्यकरणमिति छित्त्वा । सूक्ष्ममिति पाठान्तरं च मत्वा मुखस्थमिन्द्रियं वागात्मकं कण्ठादिस्थानात्मकं च । सूक्ष्मं मधुरमेव माधुर्यं च भवतीति व्याख्यायन्ते ॥ ३७ ॥

किञ्च—

**त्रिफलां लवणाक्तां वै भक्षयेच्छिष्यकः सदा ।**
**क्षीणमेधाजनन्येषा स्वरवर्णकरी तथा ॥ ३८ ॥**

लवणेन सैन्धवेन अक्ता युक्ता, ताम् । त्रिफलाम् त्रयाणां हरीतकी-बिभीतका-ऽऽमलकीनां समाहारः, ताम् । वै निश्चयेन । शिष्यः एव शिष्यकः । सदा नित्यम् । "उदाने कुपिते वाते स्वरभङ्गादिकारिणि । ग्रासे ग्रासान्तरे देयं भैषज्यं सान्ध्यभोजने । प्राणे प्रदुष्टे सान्ध्यस्य भुक्तस्यान्ते च दीयते ।" (शा० सं० पू० खं० २।८-६) इति वचनात् सायं भोजनान्ते । विशेषनिमित्ताभावे त्रिफलायास्त्रिदोषघ्नत्वात् "भैषज्यमभ्यवहरेत् प्रभाते प्रायशो बुधः" इति सामान्यतयोक्तेः प्रातः दन्तधावनान्ते वा । भक्षयेत् अद्यात् । यतः-एषा समपरिमाणा स्वतृतीयांशमितलवणमिश्रिता शीतजलेन सह भक्षिता सती हरीतक्यादिफलत्रयी । क्षीणा नष्टा चासौ मेधा प्रज्ञा, तस्याः जननी उत्पादयित्री । तथा एवम् । स्वरवर्णकरी

---

१ णं सूक्ष्मं ग, च० । णे सूक्ष्मं घ० । २ णाक्तेन ग० । एतत्पद्यानन्तरम् 'ज्ञातव्यश्चतथैवार्थं' इत्यादि ४२-४३ पद्यद्वयं पठितम् । च० त्रिफलामिति पद्यं नास्ति ॥

स्वरस्य प्राणसंतानस्य च वर्णस्य तदुत्पादकेन्द्रियसामर्थ्यस्य च करी विधायिका, सा । भवतीति शेषः ॥ ३८ ॥

हस्तेन प्रदर्शनं विना केवलं मुखस्वरेणाध्ययनस्य वैफल्यमाह—

हस्तहीनं तु योऽधीते मन्त्रं वेदविदो विदुः ॥
न साधयेद्याजुषाणि भुक्तमव्यञ्जनं यथा ॥ ३९ ॥

यः पुरुषः । मन्त्रम् । हस्तहीनम् हस्तस्वरप्रदर्शनं विना । अधीते पठति । तस्य अधीतो वेदः । तु पुनः । याजुषाणि वैदिकानुष्ठानानि । यजुरितिवेदोपलक्षणम् । यथा । न विद्यते व्यञ्जनं दधिजीरकादि-संस्करणं यत्र तद् अव्यञ्जनम् । भुक्तम् भक्षितमन्नम् । रसादिपा-करूपं फलं न साधयति तथा । न नहि । साधयेत् सिद्धिं गमयेत् । इत्थम् । वेदान्विदन्ति ज्ञायन्त इति वेदविदः वैदिकाः । विदुः मन्वते ॥ ३९ ॥

किञ्चैवं हस्तप्रदर्शनं विनाऽध्येतारं लोके वैदिकमेव न जानन्तीत्याह—

ऋचो यजूंषि सामानि हस्तहीनानि यः पठेत् ॥
अनृचो ब्राह्मणस्तावद् यावत्स्वारं न विन्दति ॥४०॥

यः ब्राह्मणः । ऋचः, यजूंषि, सामानि ऋग्वेदादीन् । हस्तही-नानि हस्तेन प्रदर्शनं विना । पठेत् । सः । तावत् । अनृचः अवैदिकोऽ-यम् । ब्राह्मणः द्विजः । इति जनैः लोके कथ्यते इति शेषः । यावत् । स्वारम् हस्तचालनार्थं स्वरस्थानम् । न । विन्दति प्राप्नोति ॥ ४० ॥

इत्थं दृष्टं फलं प्रदर्श्य अदृष्टफलं व्यतिरेकमुखेनाह—

हस्तहीनं तु योऽधीते स्वर-वर्णविवर्जितम् ॥
ऋग्यजुःसामभिर्दग्धो वियोनिमधिगच्छति ॥४१॥

---

१ एतत्पद्यम् नास्ति च० । ग० तु 'हस्तहीन' मित्यत्र 'स्वरहीनमिति "साध-येद्याजुषाणि" इत्यत्र 'साधयति यजूंषि' इति च पाठान्तरंकृत्वा पद्यद्वय मिदम् ४१त्या अनन्तरं पठितम् ॥ २ जूंषि च० ॥ ३ मुप च० ॥ कि-

तुश्चार्थं। यः। स्वरवर्णविवर्जितम्। हस्तहीनं च। अधीते। सः। ऋगादिभिः। दग्धः। वियोनिं नरकम्। अधिगच्छति प्राप्नोति ॥ ४१ ॥

स्वर-वर्णरहिताऽध्ययने दोष उक्तोऽतः स्वर-वर्णबोधक **मर्थज्ञानं** च समुच्चाययति—

**ज्ञातव्यश्च तथैवार्थो वेदानां कर्मसिद्धये ॥**
**पठन् मात्रापपाठात्तु पङ्के गौरिव सीदति ॥ ४२ ॥**

यथा दृष्टाऽदृष्टार्थं हस्तेन प्रदर्शनाय स्वर-वर्णज्ञानमावश्यकम्। तथैव। कर्मसिद्धये दृष्टाऽदृष्टफलकं कर्म साधयितुम्। वेदानाम्। अर्थश्च। ज्ञातव्यः। यतः। अर्थज्ञानमन्तरा मात्रादिज्ञानं न भवति। मात्राऽपपाठात् एकस्या अपि मात्रायाः अशुद्धपाठेन। तु पुनः। यथा। पङ्के कर्दमे। गौः। सीदति क्लिश्यति। तथा। पठन् वेदाऽध्येता क्लिश्यति ॥ ४२ ॥

अमुमेवार्थं पुष्यति—

**आगमं कुरु यत्नेन कारणं हि तदात्मकम् ॥**

हि यतः। कारणं फलसिद्धेर्हेतुभूतं यत् मात्रादिज्ञानम् तत्। तदात्मकम् अर्थज्ञानात्मकम्। अतः। आगमम् अर्थबोधकम् "शिक्षा कल्पोऽथ व्याकरणम् निरुक्तम् ज्योतिषन्तथा। छन्दः शास्त्रमित्यङ्गषट्कम् इत्यर्थः। यत्नेन आवश्यकं मत्वा तत्परतया। कुरु जानीहि। इति शिष्यम्प्रत्युपदेशः ॥

उच्चादिवर्णोच्चारणे हस्तमुखयोः समस्थायित्वमुपदिष्टं तदेव अनूद्य तत्र हस्तधारणे ये **आकृतिदोषास्तान् हेयत्वेन** निर्दिशति—

---

ज्चैतत्पद्यम् ३७ त्या अनन्तरम् ४३ त्या पूर्वार्धेन सह ४४ त्या उत्तरार्धं ४५ त्याः पूर्वार्धं च पठित्वा पठितम् ग० च० ॥ १ क्रम ग० ॥ २ वसान स्तु छ०, पाठमात्रावसान स्तु ग० 'ज्ञातव्यश्चेतिसार्धं पद्यद्वयम् ४७ त्याः पूर्वार्धस्याग्रे पठितम् क० ख० ग पुस्तके तु 'आस्येनेत्यर्धरहितमेतत् पद्यत्रयम् ३८ त्या अग्रे पठित्वा 'ज्ञातव्यश्चेति पद्यमेवात्र पुनः पठितम् ॥ च० नास्ति ॥ ३ दरं कु ग० च० ॥ ४ क ग० च० ॥

**आस्येनं च शयं कुर्यात् पठन् नान्यमतिर्भवेत् ॥४३॥**
**नचाऽस्यं मुष्टिबन्धी स्यान् नचाऽत्युत्तममाचरेत् ॥**

आस्येन चेति । पठन् अध्येता । आस्येन मुखस्थवर्णेन सह । शयम् हस्तम् । कुर्यात् । ( इति यदुक्तं तत्र ) अन्यमतिर्न भवेत् ॥ ४३ ॥ च पुनः । अस्य हस्तस्य । मुष्टिबन्धी । न । स्यात् । एवमस्य । अत्युत्तमम् स्फुटत्वम् । मुक्तहस्तत्वमित्यर्थः । न । आचरेत् कुर्यात् । हस्तचालनवेलायां हस्तस्य मुष्टिकाकृतित्वं स्फुटत्वं वा न कर्त्तव्य मिति भावः ।

यतः—

**(१)चुलु(२)नौका(३)स्फुटो(४)दण्डी(५)स्वास्तिको(६)मुष्टिका[१]-कृतिः ॥ ४४ ॥**
**एते वै हस्तदोषाः स्युः(७) परशुश्चैवं सप्तमः ॥**

चुल्वाद्याकाराः षट् । सप्तमः । परशुः परश्वाकारः । चकारः । समुच्चयार्थः । एते सप्त हस्ताकाराः । वै निश्चयेन । हस्तदोषाः । स्युः । हस्ताकृतिनिष्ठं दोषसप्तकं हेयमिति भावः ।

हस्तादिराहित्येनाऽध्ययनस्य दोषमुक्त्वा इदानीम् तत्साहित्येनाऽध्ययनस्य प्रशंसार्थं फलं दर्शयति—

**स्वर-वर्णान् प्रयुञ्जानो हस्तेनाऽधीतमाचरन् ॥ ४५ ॥**
**ऋग्यजुःसामभिः पूतो ब्रह्मलोकमवाप्नुयात् ॥**

ऋग्यजुःसामभिः ऋगादिवेदानामध्ययनेन । पूतः पवित्रान्तःकरणः । ब्रह्मलोकम् । अवाप्नुयात् । कथमधीयान इत्याकाङ्क्षायामाह—स्वर-वर्णान् । प्रयुञ्जानः । हस्तेन । प्रदर्श्य । अधीतम् अध्ययनम् । आचरन् क्रियमाणः, पठन् इति यावत् ॥

---

१ एतद्पद्यं नास्ति ग० च० ॥ २ सौ ग० । ३ रा क० ख० घ० ॥ ४ श्चेति ग०, श्चापि च० ॥ ५ हस्तेनाधीयमानस्य स्वर-वर्णान् प्रयुञ्जतः । ग०, अधीयानस्य हस्तेन स्व... तः । च० ॥

एवं वर्णोच्चारं प्रदर्श्य पदोच्चारणविशेषे आह—

**न कुर्वीत पदं दीर्घं न चाऽत्यन्तविलम्बितम् ॥४६॥**
**पदस्य ग्रहमोक्षौ च यथा शीघ्रगतिर्हयः ॥**

पदस्य । ग्रह-मोक्षौ । यथा । शीघ्रगतिः । हयः अश्वः । करोति तथा । वैदिकोऽपि । पदस्य ग्रहण समये । उच्चारण काले इति यावत् । पदम् । दीर्घम् । न । कुर्वीत । किन्तु शीघ्रमेव गृह्णीयात् । उच्चरेदिति यावत् । एवं पदस्य मोक्ष काले अर्थात् अपरं पदमुच्चारयितुमुच्चरितस्य त्यागकाले । पदम् । अत्यन्तविलम्बितम् । च । न । कुर्यात् । किन्तु शीघ्रमेव मुञ्चेत् । तथा च एकम्पदं शीघ्रमुच्चार्याऽविलम्बेन द्वितीयमुच्चरेदिति भावः ॥

किञ्च हस्तप्रदर्शनमपि विशेषयितुं पदस्य ग्रहे मोक्षे च हस्तमुखयो र्यौगपद्यमनुवदति—

**यथा वाणी तथा पाणी रिक्तं तु परिवर्जयेत् ॥४७॥**
**यत्र यत्र स्थिता वाणी पाणिस्तत्रैव तिष्ठति ॥**

यत्र यत्र । वाणी । स्थिता । स्यात् । तत्रैव । पाणिः हस्तः । तिष्ठति । इति नियमात् । यथा । वाणी । पदस्य ग्रहमोक्षौ कुर्यात् । तथा । पाण्यपि कुर्यात् । वाण्या सममेव हस्तं चालयेत् इति भावः । रिक्तं शून्यहस्तस्थलम् ॥ तु । परिवर्जयेत् । यौपगद्य विषये इति शेषः । यतः । शून्यहस्तस्थले मुखस्वराभावात् हस्तस्यापि पूर्वस्वराधिकरणस्थले एव मात्राद्वयं यावद्धारणस्य "रिक्तंतु" ( या० शि० स्व० प्र० १४ ) इति कारिकायामुक्तत्वान्न मुखहस्तयोः समस्थानमिति भावः ॥

उक्तमेवार्थं दृष्टान्तेन दृढयति—

**यथा धनुष्याऽऽवितते शरे क्षिप्ते पुनर्गुणः ॥ ४८ ॥**
**स्वस्थानं प्रतिपद्येत तद्वद्धस्तगतः स्वरः ॥**

यथा । धनुषि । आवितते प्रसारिते । शरे वाणे च । क्षिप्ते प्रेरिते सति । पुनः भूयः । गुणः प्रत्यञ्चा, धनूरज्जुरितियावत् । स्वस्थानम् ।

५

प्रतिपद्येत । शरक्षेपणाय मध्यत आकृष्टा रज्जुः यथा समा भवेत् इति भावः । तद्वत् । हस्तगतः करेणदर्शनीयः । स्वरोऽपि स्वरप्रदेशोऽपि । पदोच्चारणकाले शैघ्र्येण प्रदर्शनीयः । एवमपरपदोच्चारणकाले पूर्वोच्चरित-पद-मोक्षकालीन-हस्तदर्शनीय-स्वरप्रदेशोऽपि प्रदर्शनीयः । अर्थात् शीघ्रमेवाऽपरपद-गत-स्वरप्रदर्शनार्थंकरः चालनीयः ।

ननु "यथादावुच्चरेद्वर्णानिति ( या. शि. स्व. प्र. २४ ) कारिकया वृत्तिरभिव्यक्ता तस्यास्त्रैविध्यम् ॥ कुत्र कीदृशी करणीया, इति च अधुना हस्त-मुखयोर्यौगपद्यप्रसङ्गेनाह—

**अभ्यासार्थे द्रुतां वृत्तिं प्रयोगार्थे तु मध्यमाम् ॥४९॥**
**शिष्याणामुपदेशार्थे कुर्याद् वृत्तिं विलम्बिताम् ॥**

अभ्यासार्थे घोषणार्थ-गुणिकायाम् । गुण्डिकेति भाषाप्रसिद्धायाम् इत्यर्थः । द्रुताम् अर्धमात्रिकाम् वृत्तिम् । यां गायकाः "दून" नाम्ना लोके व्यवहरन्ति । तथोक्ताम् इत्यर्थः । तथा च रत्नावली– " अर्धमात्रं द्रुतं ज्ञेयं द्रुतार्धं चाप्यनुद्रुतम् " इति । प्रयोगार्थे कर्मानुष्ठानकाले । तु पुनः । मध्यमाम् । वृत्तिम् यां गायकाः " चलत " नाम्ना वदन्ति । तादृशीम् इत्यर्थः । शिष्याणामुपदेशार्थेऽध्यापनकाले इत्यर्थः । विलम्बिताम् । वृत्तिम् यां गायकाः "ठाह" नाम्ना भाषन्ते । तथाविधामित्यर्थः । कुर्यादित्यस्य सर्वत्रान्वयः ॥

किञ्च द्रुता न सर्वत्र प्रयोगार्हा इति दैवताभिधानमुखेन फलं व्यञ्जयन् निन्दति—

**ऐन्द्री तु मध्यमा वृत्तिः प्राजापत्या विलम्बिता ॥५०॥**
**अग्निमारुतयोर्वृत्तिः सर्वशास्त्रेषु निन्दिता ॥**

इदि परमैश्वर्ये इत्यन्वर्थतया यथा इन्द्रः सर्वैश्वर्यं स्वस्योपासकाय ददाति एवं तद्दैवत्या वृत्तिरपि देयात् इत्याह— मध्यमा । वृत्तिः । तु । इन्द्रो देवता अस्या इत्यैन्द्री । भवतीति शेषः ।

---

१ एतद् पद्यद्वयम् ङातिरिक्तपुस्तकेषु अत्र नास्ति । क्वचित् घादिपुस्तके ४५ कारिकायाः पूर्वार्धं पठित्वा, क्वचित् ग० च० ४७ कारिकायाः पूर्वार्धं पठित्वा पठितम् ॥

प्रजापतिर्यथा प्रपञ्चं रचयति तथा] तद्दैवत्या वृत्तिरपीति विलम्बितायाः प्राजापत्यात्वं विधत्ते। विलम्बिता। वृत्तिः। प्राजापत्या। अर्थात् इयमपि प्रजापतिवत् शिष्यहृदि वर्णधारणेन ग्रन्थमुत्पादयति। अग्निवाय्वोर्योगाद् दावानलेन यथा हानिः तथा तदुभयदैवत्यायाः द्रुतावृत्तेरपि वर्णाऽग्रहणेन हानिकरत्वमित्याह-अग्निमारुतयोः। वृत्तिः परिशेषात् द्रुताख्या। सर्वशास्त्रेषु। गर्हिता निन्दिता। भवतीति सर्वत्र शिष्यते ॥

अत्र प्रासङ्गिकं नारदोक्तं प्रदर्श्यते—

मन्द्रेणोपक्रमेत् पूर्वं सर्वशाखास्वयं विधिः ॥
सप्तमन्त्रानतिक्रम्य यथेष्टां वाचमुत्सृजेत् ॥
न तां समीरयेद्वाचं या प्राणमुपरोधयेत् ॥
प्राणानामुपरोधेन वैस्वर्यं चोपजायते ॥
स्वरव्यञ्जनमाधुर्यं लुप्यते नात्र संशयः ॥

( ना० शि० ८-१० ) इति ॥

इति श्री योगिवरयाज्ञवल्क्यमहर्षिप्रोक्तायां शिक्षायां स्वरप्रकरणे दीक्षिताऽमरनाथशास्त्रिकृतायां शिक्षावल्ल्याख्यायां विवृतौ अध्ययनविध्यधिकारः ॥ २ ॥



## अथ हस्तचालनविधिः ॥

तत्र तावत् हस्तसंनिवेशप्रकारमाह—

**उत्तानं सोन्नतं किञ्चित् सुव्यक्ताङ्गुलिरञ्जितम् ॥५१॥**
**स्वरविच्चं करं कुर्यात प्रादेशोद्देशगामिनम् ॥**

उत्तानमित्यादिना। स्वरवित् स्वरज्ञः। करम् हस्तम्। स्वरप्रदर्शनाय। उत्तानम् उपरितलम्। चकारः सर्वत्रानुषज्यते। किंचित् सामान्येन। सोन्नतम् अङ्गुल्यग्रेषु औन्नत्यविशिष्टम्। सर्पफणाकारमिति यावत्। सुव्यक्ताः ऋजवश्च ताः अङ्गुल्यः,

१ द्व॰ घ० ङ० भिन्न पु० पाठः।

ताभिः रञ्जितम् । प्रादेशस्य उद्देशं स्थानं गन्तुं शीलः इति प्रादेशोद्देशगामी तथोक्तम् । च । कुर्यात् ॥

ननु प्रादेशोद्देशगामिनं हस्तं कुर्यादित्युक्तम् तर्हि तत्र कः प्रादेशोद्देशः इत्यत आह—

**अङ्गुष्ठस्योत्तरं[1] पर्व[2] तर्ज[3]न्युपरि यद्भवेत् ॥ ५२ ॥**
**प्रादेशस्य तु सोद्दे[4]शस्तन्मात्रं चालयेत्करम् ॥**

(अंगुष्ठपर्वं)
क.....ट (तर्जनीपर्वं)



च
(अंगुष्ठतर्जन्योः सन्धिः)

(क-च-ट रूपेण धनुराऽऽकारेण प्रसारितयोरङ्गुष्ठतर्जन्योर्मध्ये) अङ्गुष्ठस्योत्तरम् । पर्व । "क" इत्यारभ्य । तर्जन्याः उपरि इति तर्जन्युपरि । "ट" पर्यन्तं दीयमानं सूत्रं प्रत्यञ्चास्थानीयम् । यत् दशाङ्गुलपरिमितम् "क - ट" रूपम्—अन्तरालम् । भवेत् ॥ ५२ ॥ सः 'क'-'ट' रूपात्मकोऽवकाशः । तु एव । सोद्देश इत्यत्र "सोचि लोपे" (पा० सू० ६।१।१३४) इति सोर्लोपे गुणे कृते सन्धिः । प्रादेशस्य । उद्देशः प्रमाणस्थानम् । भवतीति शेषः । तन्मात्रं दशाङ्गुलान्तरम् । करं स्वरप्रदर्शनाय हस्तम् । चालयेत् ॥

इत्थं हस्तचालने तदवयवसंनिवेशप्रकारं प्रदर्शयन् मध्ये प्रासङ्गिकं प्रादेशमानमुक्तम् पुनः प्रक्रान्तमनुसरति—

**मनुष्य-तीर्थोच्चं कृत्वा पितृ-तीर्थोदकं व्रजेत् ॥५३॥**
**नामितं कर[6]पृष्ठन्तु सुव्यक्ताङ्गुलिमोक्षणम् ॥**

(दक्षिणहस्तस्य) मनुष्यतीर्थमुच्चं यथा स्यात्तथा कृत्वा पितृतीर्थेन उदकं जलं (यथा) व्रजेत् पतेत् । पितृतीर्थप्रदेशं दक्षिणप्लवं विधायेत्यर्थः । करपृष्ठं हस्तस्या-ऽधस्तल-प्रदेशस्थाऽङ्गुलिमूलभागम् । तु । नामितम् निम्नं कृत्वा (अर्थात् पितृभ्यो जलदाने या चुलुकमुद्रा भवति तथा हस्तो धरणीयः । परमेतावा-

---

१ रे क० ख० ॥ २ वें क० ख० । ३ यत्रस्यो- परि ग० च० ॥
४ योदे घ० । प्रा० स्य सतृदे च० ॥ ५ थंस्यौन्नत्यात्र पितृतीर्थे जलं व्र च० ॥
६ रं पृष्ठे तु क० । रपृष्ठे तु घ ञातिरिक्तपाठः ॥

नत्र विशेषः । सुव्यक्तानामङ्गुलीनां मोक्षणम् ऋजुत्वं यत्र तथाभूतम् । करं कुर्यात् इति शेषः । ऋज्वङ्गुलियुतपितृचुलुकवद्धस्तं धारयेदिति निष्कर्षः । मनुष्यतीर्थादिलक्षणमाह- अमरसिंहः । "स्वल्पाङ्गुल्योर्मूले कायम् ( मानुषमपि स्मृत्यन्तरादस्यैव संज्ञा )॥ मध्येऽङ्गुष्ठाङ्गुल्योः पित्र्यम्" इति ॥

अथ स्पष्टप्रतिपत्तये याज्ञवल्क्यस्मृतिवचनं च प्रदर्श्यते-

कनिष्ठा(१)देशिन्य(२)ङ्गुष्ठ-मूलान्यग्रं(४)करस्य च ।
प्रजापति(१)पितृ(२)ब्रह्म(३)देव(४)तीर्थान्यनुक्रमात् ॥

( या० स्मृ० १।१९ ) इति ॥

इत्थम् सामान्यतो हस्तचालने साकृतिपरिमाणमुक्त्वाऽधुना हस्तचालने कुत्र कियदन्तरं कर्तव्यमित्याह—

## स्वरिते त्र्यङ्गुलं विद्यात् निपाते तु षडङ्गुलम् ॥ ५४ ॥
## उत्थाने तु नवाङ्गुल्यमेतत्स्वारस्यलक्षणम् ॥

स्वरिते त्र्यङ्गुलमिति । पूर्वं "हस्तौ सुसंयता ( या० शि० स्व० प्र० १९ ) वित्यङ्गसंनिवेशेन सज्जितः, पश्चाच्च उत्तानं सोन्नतम्" ( या० शि० स्व० प्र० ५१ ) मित्युक्तप्रकारेण हस्तस्य फणाकृतिं च कृत्वा, नासिकाग्रसमसूत्रतया धृताङ्गुल्यग्रः सन्, स्वरानुसारिणं हस्तं प्रादेशगामिनं चालयेत्, तत्र उदात्तस्थानात्। स्वरिते स्वरितस्थाने । हस्ते नीयमाने सति । त्र्यङ्गुलम् अन्तरम् विद्यात् । एवं स्वरितस्थानात् मध्यतः वामपार्श्वे उदात्तस्थानं गच्छति हस्ते च त्र्यङ्गुलमन्तरमर्थसिद्धम् । निपाते तु मध्यतोऽनुदात्तस्थानं प्रति गच्छतो हस्तस्य इत्यर्थः । षडङ्गुलम् षडङ्गुलमितम्, अन्तरम् इत्यर्थः । विद्यादित्यनुवर्त्तते । उत्थाने अनुदात्तस्थानात् उदात्तं प्रति गच्छतो हस्तस्य इत्यर्थः। तु पुनः । नवाङ्गुल्यम्

---

१ "निवीती हन्तकारेण मनुष्यांस्तर्पयेदथ । कुशस्य मध्यदेशेन "नृतीर्थेन ह्युदङ्मुखः" इति लघुविष्णुवचनेन "निवीती 'कायतीर्थेन, मनुष्यान् सनकादिकान्" इति योगियाज्ञवल्क्यवचनप्रतिपादितकायतीर्थस्थानीयस्य नृतीर्थस्याभिहितत्वात्। क्वाचित्करमध्यस्य प्रतिग्रह-ग्रहणार्थम् अग्नितीर्थत्वेन दिशन्तीत्यपि ज्ञेयम् । ब्राह्मतीर्थादेराचमनादावप्युपयोगः स्मृतिषु प्रोक्तो ज्ञेयः ।

नवाङ्गुलप्रमाणम्, अन्तरम् इत्यर्थः । विद्यादित्यनुवर्त्तत एव । एतत् पूर्वोक्तम् । स्वारस्य स्वरसंबन्धि-हस्तचालनस्य । लक्षणम् स्वरूपम् । सामान्यतः गदितम् इति शेषः । तथा हि—"हस्तेन ते" ( शु० य० प्रा० १।१२१ )। अस्यार्थः। ते उदात्तादयः स्वराः हस्तेन प्रदृश्यन्ते । तत्र उदात्तं हस्तस्य ऊर्ध्वगमनम् । अनुदात्ते च अधोगमनम् । स्वरिते तु मध्ये, अर्थसिद्धम् । इति । इत्थं यस्त्व्यङ्गुलाद्यन्तरायः उदात्तादिषु हस्तचालनस्य प्रोक्तः स किंचिन्नम्रस्य अधोमुखस्य च अध्येष्यमाणस्य संगच्छते नान्यथा ॥

उदात्तादीनां स्थानानि चाह—

**उदात्तं तु भ्रुवः प्रान्ते प्रचयं नासिकाग्रतः ॥ ५५ ॥**
**हृत्प्रदेशेऽनुदात्तं तु तिर्यग् जात्यादिरीरितः ॥**

उदात्तम् मुखेनोच्चारितम् उच्चस्वरम् । तु निश्चयेन । भ्रुवः भ्रुकुट्याः । प्रान्ते समीपे । दक्षिणकर्णाग्रे इति यावत् । स्थितं हस्तेन प्रदर्शयेत् इति शेषः । एवमुत्तरत्रापि । प्रचयम् स्वरितं विकृतमविकृतमिति द्विविधमपि । नासिकाग्रतः मुखाभिमुखम् । कर्णमूले इति यावत् । अनुदात्तम् नीचस्वरम् । तु पुनः । हृत्प्रदेशे हृदयाऽऽभिमुख्यस्थाने ॥ तथाहि—"हृद्यनुदात्तः । मूर्ध्न्युदात्तः । श्रुतिमूले स्वरितः" ( का० प० प्र० सू० १।४-६ ) इति । यथा—"अग्ना ३ इ" ( शु० य० सं० ८।१० ) इति उदात्तः । "त्वा" ( शु० य० प० १।१ ) इति अनुदात्तः । "प्रजावतीरिति प्रजा । ऽवतीः" ( शु० य० प० १।१ ) इति अवग्रहात्परौ स्वरित-प्रचयौ । तथा च—"एवं जात्यादयोऽभिहिताः" ( का० प० प्र० सू० १।७ ) इति । यथा—"त्र्यम्बकम्" ( शु० य० सं० ३।६० ) इत्यादयः । इत्थं सामान्येन तत्र तत्र स्थितानाम् मुखोच्चरितानाम् उदात्तादित्रयाणां हस्तेन प्रदर्शनं विधाय, इदानीम् "अष्टौ स्वरान्" ( या० शि० स्व० प्र० ७६-८५ ) इत्यादिना वक्ष्यमाणानां स्वरितविशेषाणां जात्यादीनां

---

१ तां भुवि पातेन प्रचयं नोऽग्र एव च । शेषंषडङ्गुलं विन्द्यात् निचितंतु विधीयते क, ख० । तां भुवि पातव्यं प्रचंनासाग्र एव च । हृ ..., तां च तिर्यग्जात्यादिकाः स्वराः ग० ॥

हस्तेन प्रदर्शने किंचिद्वैशिष्ट्यमाह— तिर्यगिति । जात्यादिः जात्याऽभिनिहित-क्षैप्र-प्रश्लिष्टेति चत्वारः अनुदात्तात्पराः स्वरिताः । तिर्यक् यद्युदात्तः परो न भवति तदा एते पितृपिण्डप्रदान-मुद्रावत् दक्षिणतः अर्धन्युब्जं हस्तं कृत्वा, उदात्तश्चेत् परो भवेत्तर्हि मनुष्यदानमुद्रावत् वामतः पूर्णन्युब्जं हस्तं कृत्वा च स्वरणीयाः इति । ईरितः कथितः । आचार्यैः इति शेषः । तथाहि—"चत्वारस्तिर्यक् स्वरिताः । अनुदात्तं चेत्पूर्वं तिर्यङ् निहत्य कारयस्य । ऋजुं निहत्य प्रणिहन्यते उदात्ते" ( शु० य० प्रा० १।१२२-१२४ ) इति । यथा—"व्वैष्णव्व्यौ" ( शु० य० सं० १।१२ ) इति जात्यः । "व्वेदोसि" ( शु० य० सं० २।२१ ) इति अभिनिहितः । "अब्भ्यर्षत" ( शु० य० सं० १७।९८ ) इति क्षैप्रः । "अभीन्धतामुखे" ( शु० य० सं० ११।६१ ) इति प्रश्लिष्टः । एते चत्वारः उदात्तपरत्वाभावात् अर्धन्युब्जाः भवन्ति । उदात्ते परभूते यथा—" भूर्भुवः स्वर्द्यौरिव" ( शु० य० सं० ३।५ ) इति जात्यः । "प्रसवेश्विनोर्बाहुब्भ्याम्" ( शु० य० सं० १।१० ) इति अभिनिहितः । "विश्श्वन्न्यत्रिणम्" ( शु० य० सं० १७।१६ ) इति क्षैप्रः । "स्रुचीवेति" ( शु० य० प० २०।६९ ) इति प्रश्लिष्टः । एते उदात्तपराः अनुदात्तपूर्वाः सन्तः जात्यादयः पूर्णन्युब्जाः भवन्ति ॥

जात्यादेः तिर्यग् हस्तचालने कियदन्तरं करणीयमित्याह—

**षडङ्गुलं तु जात्यस्य हस्तस्याऽनुपथस्य च ॥५६॥**
**तच्चतुर्भागमात्रं तु हस्तं तेनैव वर्त्तयेत ॥**

जात्यस्य पूर्णाऽर्धन्युब्जाऽन्यतरस्वरितप्रदर्शकस्य । हस्तस्य मध्यात् अनुदात्तस्थानं प्रति गच्छतः करस्य । तु निश्चयेन । षडङ्गुलम् अङ्गुलषट्कात्मकम् अन्तरमित्यर्थः । अनुपथस्य मूलस्थानात् हृदयसंनिकृष्टं हस्तचालनं कृत्वा प्रत्यावृत्तहस्तमार्गस्य । च अपि षडङ्गुलमितमन्तरं भवतीत्यर्थः । तिर्यक्स्वरणीयान्तरालम् उक्त्वा

१ स्तत् क ख० । षडङ्गु०...स्य च । तच्च...तु भूयस्तेनै ग च० ।

इदानीम् अर्धन्युब्जस्थले " अनुदात्तं चेत्पूर्वं तिर्यङ् निहत्य " ( शु० य० प्रा० १।१२३ ) इति प्रातिशाख्यात् प्राप्तं यत् पितृतीर्थनिम्नीकरणं तत्राऽन्तराले मानविशेषमाह—तच्चतुरिति । तुकारः किन्त्वर्थे । किन्तु । अर्धन्युब्जे इति शेषः । तस्य षडङ्गुलाऽन्तरालस्य, चतुर्भागमात्रम् चतुर्थांशमितम् । सार्धाङ्गुलप्रमाणमितियावत् । पितृतीर्थेन निम्नं कृत्वेति शेषः । हस्तम् हृदयसंनिकृष्टं करम् । तेनैव षडङ्गुलान्तरालवता पथा एव । वर्तयेत् हृत्प्रदेशात् मध्ये आनयेत् । मूलस्थानं प्रापयेदित्यर्थः । अत्राऽयं विवेकः । अर्धन्युब्जस्थले मूलस्थानस्थितं हस्तं पितृतीर्थतः सार्धाङ्गुलान्तरालं नमनेन जातमर्धन्युब्जं ततो हृदयं यावत् षडङ्गुलान्तरं मण्डलाकारं संचाल्य । पुनः मूलस्थानं प्रापयेत् । तदेवाऽर्धन्युब्जता जात्यादीनामनुदात्तपूर्वाणाम् । यद्येतेभ्यः परः उदात्तो भवेत्तदा तु तिर्यङ् निहननं पितृतीर्थनिम्नीकरणात्मकमपोह्य "ऋजुं निहत्य प्रणिहन्यत उदात्ते" ( शु० य० प्रा० १।१२४ ) इति ऋजुनिघात-विधायक प्रातिशाख्यात् उत्तानमेव हस्तं पूर्वं मूलस्थानतो हृत्संनिकृष्टम् अवतार्य पुनः षडङ्गुलान्तरालात्मके मध्ये प्रत्यावृत्य च प्रणिहन्यते पूर्वं ऋजुत्वाख्यानात् संप्रति न्युब्जता सूचिता । प्रणिहन्यत इति प्रोपसर्जनाच्च पूर्णता द्योत्यते । अतएव मनुष्यतीर्थेन नीची क्रियते । एतदेवात्र पूर्णन्युब्जता भवति । पूर्वोक्तान्येव उदाहरणानि ज्ञेयानि ॥ इदमुदात्तादीनां हस्तेन प्रदर्शनं कथितम् । स्वरोत्पत्तिस्थानानि तु "सवनक्रमेणोरः कण्ठभ्रूमध्यानि" (शु० य० प्रा० १।३०) इति त्रीणि भवन्ति । एषु उच्चार्यमाणेषु वर्णेषुत्रयो विकाराः शरीरस्य पर्यायेण भवन्ति । "आयाम-मार्दवाऽभिघाताः" ( शु० य० प्रा० १।३१ ) इति । आयामो नाम ऊर्ध्वं गमनं शरीरस्य । मार्दवं नाम अधोगमनं गात्राणाम् । अभिघातः तिर्यग् गमनं गात्राणाम् । योऽयं नामाऽभिघातः सः "उच्च नीच विशेषः" ( शु० य० प्रा० १।३२ ) इति । एवमुत्पद्यमानाः के स्वरा इत्याह "उच्चैरुदात्तः" (शु० य० प्रा० १।१०८) इति । वायोरूर्ध्वं गच्छतः शरीरस्य वक्षःस्थलस्य कण्ठस्य भ्रूमध्यस्य च आयामो भवति तेनोत्पन्नः स्वर उदात्तो भवति । अत एव सिद्धान्तकौमुदीकारः ताल्वादिषु समानभागेषु स्थानेषूर्ध्वभागे निष्पन्नोऽजुदात्तसंज्ञो भवति इत्युक्तवान् । एवं च वाचो हस्तस्य च तुल्या स्थितिः सुसंगता ।

एवमग्रेऽपि योज्यम् । यथा—"गणानान्त्वा" (शु० य० सं० २३।१६) इत्यत्र णकारोत्तरवर्त्तिन आकारस्योदात्तत्वगुणविशिष्टस्योच्चारणे शरीरस्योर्ध्वगमनं भवतीत्यनुभविनो वैदिकस्य विदितमेव । "नीचैरनुदात्तः" ( शु० य० प्रा० १।१०९ ) इति वायोरधो गच्छतः वक्षःस्थलादीनां मार्दवं भवति तेनोत्पन्नः स्वरोऽनुदात्तो भवति तथाहि कौमुदीकारः-ताल्वादिस्थानेष्वधोभागे निष्पन्नोऽजनुदात्तसंज्ञो भवतीति व्याजहार । अत एव हृत्प्रदेशेऽनुदात्तोच्चारणकाले हस्तप्रदर्शनेन मुखहस्तयोः समा स्थितिः सुसंगता । यथाऽस्मिन्नेवोदाहरणे गकारोत्तरवर्तिनोऽकारस्याऽनुदात्तत्वविशिष्टस्योच्चारणकाले वक्षःस्थलस्याधोगमनं हृत्प्रदेशे वायौ गच्छति सति भवतीत्यपि वैदिकैरनुभव्यम् । "उभयवान्स्वरितः" ( शु० य० प्रा० १।११० ) इति । वायोस्तिर्यग्गच्छतः शरीरस्य वक्षःस्थलाद्यङ्गस्य ( ^ ) एवमाकारेण ऊर्ध्वाधोगमनाभ्यां यः स्वरः उत्पद्यते सः स्वरितो भवति । तथा च कौमुदीकारः- उदात्तत्वाऽनुदात्तत्ववर्णधर्मौ समाह्रियेते यस्मिन्नचि सोऽच् स्वरितसंज्ञो भवतीति बभाण । तेन नासिकाग्रे श्रुतिमूले ( कण्ठे ) च हस्तमुखयोः समं स्थानं सूपपन्नम् । यथाऽत्रैवोदाहरणे नकारोत्तरवर्तिन आकारस्य स्वरितस्योच्चारणे गात्राणाममिघातः ( ^ ) एवम् ऊर्ध्वाधोगमनाभ्यां भवतीत्यनुभववद्भिर्वैदिकैर्ज्ञेयः । एवं प्रचयस्य त-व संयुताऽऽकारस्यात्रैवोदाहृतस्य स्वरितसमानस्य नासिकाग्रे कण्ठे च स्थितिर्भवतीत्यपि वैदिकैर्विदिता । स्वरितो जात्यादिभेदेनाऽष्टधा भिन्नो वक्ष्यते । तत्र चतुर्षु तिर्यक् स्वरश्च पूर्णाऽर्धाऽन्यतरन्युब्जहस्तकरणेन दर्शनीयः इति "तिर्यगि (या० शि० स्व० प्र० ५६) त्यादिना व्याख्यातः ।

अथोदात्तादि-सूचकरेखादि प्रदर्श्यते स्वनिर्मितकारिकाभिः—

ऊर्ध्वरेखा तु वर्णस्य ( नान्त्वा शु० य० सं० २३।१६ ) मूर्ध्नि तिष्ठति या स्थिरा ॥ स्वरितं तत्र जानीयात् ।

पादपार्श्वे तु या स्थिता ॥ १ ॥

(ग शु. य. सं. २३।१६) तिर्यग्रेखाऽनुदात्तस्य ! वर्णस्य बोधिका

हि सा ॥

उदात्तं रेखया हीनं न स्याच्चेत्स्वरितात्परम् (गणानाम् शु. य. सं. २३।१९। षेन शु. य. सं. २३।१९ ) ॥ २ ॥

स्वरितादुत्तरं चेत्स्यात् ( नांन्त्वा शु. य. सं. २३।१९ ) तदेव ( रेखया हीनमेव ) प्रचयं विदुः ।

पूर्णोऽर्धन्युब्जकौ ज्ञेयौ स्वरितौ तु क्रमेण हि ॥ ३ ॥

षड् ( प्रसवेऽश्विनो शु. य. सं. १।१० ) चतुरङ्कयोगेन ( वेदोसि शु. य. सं. २।२१ ) वर्णस्याधः कृतेन च ॥

यद्वि वाऽष्टाङ्कयोगेन (वेदोसि शु. य. सं. २।२१) नवाङ्कयोगतो-( वेदोसि शु. य. सं. २।२१ ) ऽथवा ॥ ४ ॥

अर्धन्युब्जो हि विज्ञेयो विशेषो नाऽत्र कश्चन ॥

वलिकाद्यूष्मभेदानां भवेत्परिचयस्त्वयम् ॥ ५ ॥

ऊष्मबिन्दुद्वयस्यान्त ( ÷ ) स्तिर्यग्रेखा तु या स्थिता ॥

उभंक्षेपस्वरं तत्र स्वरतत्वविदो विदुः ॥ ६ ॥

प्रचिता सैव विज्ञेया स्वरितादूष्मदर्शनात् ( देवो वः÷ शु. य. सं. १।१ ) ॥

ऊर्ध्वरेफसमाना या बिन्दुमध्ये ( ॢ ) स्थिता तराम् ॥ ७ ॥

तर्जनीक्षेपिकां तत्रो-दात्ताच्चोष्मोदयो ( सहस्रात्ॢ शु. य. सं. ३१।१ ) यतः ॥

रेखा बिन्दुद्वयस्यान्त ( ॢ ) रधोरेफसमा च या ॥ ८ ॥

वलिकां तत्र जानीयात् कनिष्ठायाश्च क्षेपणीम् ( पुरुषॢ शु. य. सं. ३१।१ ) ॥

रङ्गं तु तं विजानीयाद् योऽनुनासिक्यसंयुतः ॥ ९ ॥

सार्द्धद्वयङ्केन च तथा "महाँ २॥ ऽइन्द्रो" ( शु. य. सं. ७।३९ ) निदर्शनम् ॥

"क्रतूँ३॥ रन्विति ( शु. य. सं. ७।३७ ) तथा, सार्द्धैकाङ्केन

---

१ संज्ञात्वादयजभावः ।

( क्रतूँ १॥ रन्तु शु. य. सं. ७।३७ ) चाऽथवा ॥ १० ॥
द्वयोस्तु स्वरयोर्मध्ये(ऽ)खण्डाकारः प्रदृश्यते ॥
विवृतिं तत्र जानीयात् 'नाऽभ्याऽआसीत्' ( शु. य. सं. ३१।१३ ) निदर्शनम् ॥ ११ ॥
लघ्वनुस्वारकं बिन्दुं ( ँ ) जानीयाद्धनुपि स्थितः ॥
स (ँ) एव यदि संयोगे गुरुत्वं तत्र निर्दिशेत् ॥ १२ ॥
'यजूँषि '(शु. य. सं. ३४।५) च 'तपूँष्यग्ने' ( शु. य. सं. १३।१० ) तयोः क्रमेण दर्शने ॥
बिन्दुगर्भोर्द्ध्वरेफेण ( ꣳ ) ठकारो यो हि दृश्यते ॥ १३ ॥
दीर्घानुस्वारकं तन्तु जानीयात् 'किꣳशिला' (शु. य. सं. १६।१३) यथा ॥
अथ बिन्दुर्यदा दृष्टो (वज्रेन यज्ञमयजन्त शु. य. सं. ३१।१६)
यकारस्यान्तरे स्थितः ॥ १४ ॥
अथवा कर्णसूत्रेण ( येन शु. य. सं. ३४।२ ) यकारो गर्भितो यदा ॥
तदा तु तत्र जानीयाज् जकारोच्चारणं बुधः ॥ १५ ॥
पद्यपञ्चदशी चेयं माध्यन्दिनमतेन वै ॥
रसाष्टनवभू (१६८६) वर्षे पत्तने विजयाह्वये (फतेहपुरनाम्नि)१६
छात्रान् " शाकम्भरी-संस्कृत-विद्यालयमास्थितान् ॥
सधर्मशास्त्र-मीमांसं सतर्कं च सभाष्यकम् ॥ १७ ॥
समध्यापयता नित्यं साङ्गं वेदं च सक्रियम् ॥
वेदेषु प्रविविक्षूणां बालानां बोधमिच्छता ॥ १८ ॥
श्यामपौत्रेत्युपाह्वेन सारस्वतकुलोद्भुवा ॥
सोमयागविशुद्धानां श्रीगङ्गाधरशर्मणाम् ॥ १६ ॥
तथा बल्लीतिदेवीनां मातॄणामङ्गसम्भुवा ॥
दीक्षिताऽमरनाथेन प्रोक्ता संकेतबोधिका ॥ २० ॥
प्रीत्यै भूयाज्जगत्पित्रोः श्री-श्रीनाथाख्ययोः सदा ॥२१॥

अथोदात्तानुदात्तयोः सामान्येन मूर्ध्नि हृदि च हस्तप्रदर्शने प्राप्ते क्वचिदपवादं वाम-दक्षिणपार्श्वविवेकरूपमाह–

उदात्तादनुदात्ते तु वामाया भ्रुव आरभेत् ॥५७॥

तत्रोदात्तेऽनुदात्तपरके वामतो न्यासः इत्याह उदात्तादिति। उदात्तात् उच्चस्वरात्। अनुदात्ते नीचस्वरे परे सति। तु पुनः। उदात्तस्योच्चारणे हस्तचालनम्। वामायाः। भ्रुवः। आरभेत्। अर्थात् वामभागे हस्तो धर्त्तव्यः इति। यथा-ततो विराडंजायतेति मन्त्रस्योत्तरार्धारम्भे सजातोऽ अत्यरिच्यत (शु० य० सं० ३१-५) त्यत्र सकारोत्तरवर्त्तिनोऽकारस्योदात्तस्योच्चारणसमये हस्तस्य वामभागे स्थितिः। न तु दक्षिणभ्रुवः प्रान्ते तस्य स्थितिः कर्तव्या, उत्तरत्र जकारोत्तरवर्त्तिन अकारस्य अनुदात्तीभूतस्य सत्वात्। एवम् "तस्मादश्श्वा" (शु० य० सं० ३१। ८) इत्यादावपि बोध्यम् ॥ ५७ ॥

एवमुदात्ते वामतो हस्तन्यासं विशिष्याऽनुदात्ते दक्षिणतो हस्तन्यासं विशिनष्टि[1]—

उदात्तस्वरितोदात्ताः[2] क्रमाद्दक्षिणतो न्यसेत् ॥

उदात्तेति। –'अनुदात्ते' इत्यनुवर्त्तते। तेन यस्यानुदात्तस्य अग्रे उदात्तस्वरितोदात्ताः उदात्तः स्वरितः उदात्तश्च। क्रमात् आनुपूर्व्येण। स्युरितिशेषः तस्मिन्ननुदात्ते। हस्तमिति शेषः। दक्षिणतो न्यसेत् क्षिपेत् ॥ यथा—"इषेत्वा" (शु० य० क० १।१) इति पदयोः 'ऊर्ज्जे (शु० य० प० १।१)' इति पदेन सह संहिताविवक्षायाम् अनुदात्तोकारे दक्षिणतो हस्तो न्यस्तव्यः। यतः–अग्रे षकारोत्तरैकारः उदात्तः, तस्माच्च त्वेत्यत्राऽऽकारः स्वरितः, ऊर्ज्जे इत्यत्रोकारः अनुदात्तः, सोऽपि एकीभावेन 'स्वरितवान् स्वरितः' (शु० य० प्रा०

---

१ अतिरिक्तेषु इत आरभ्य ६१ कारिकायाः पूर्वार्धान्तः पाठोऽत्र न धृतः। किन्तु तत्र पुस्तकेषु यत्रकुत्र प्रकीर्णइव वर्णप्रकरणे समुपलभ्यते ॥

२ तात्स्वरितोदात्तौ ग०। त्तात्स्वरितोदात्ते घ० ॥

४।१३१ ) इति स्वरितो जातः, ततश्च रेफजकारद्वयोत्तरवर्त्ती एकारः उदात्तः, तस्मिन् परे स्वरितस्यतकारवकारोत्तरवर्त्तिन ओकारस्य अनुदात्तत्वम् ' निहितमुदात्तस्वरितपरम् ' ( शु० य० प्रा० ४।१३६ ) इति प्रातिशाख्यात् । एवं क्रमात् उदात्तस्वरितोदात्ताः अनुदात्तो-कारस्य अग्रे विद्यन्ते । अतः-' इ॒षेत्त्वो॒र्ज्जे ' ( शु० य० सं० १।१ ) इति संहितायाम् ' इ॒ ' कारे दक्षिणतो हस्तश्चालनीयः । षकारो-त्तरैकारे तूदात्ते पूर्ववाक्यात् वामे स्थितिर्हस्तस्य, अग्रेऽनुदात्तस्य तकारवकारोत्तरौकारस्य सत्वात् । एष निष्कर्षः यत्रानुदात्तो-ऽनुदात्तपरकोदात्तपरत्वं स्यात् तत्र पूर्वानुदात्ते हस्तस्य दक्षिणतो न्यासः । यत्रानुदात्ते स्वरितपरकोदात्तपरत्वं स्यात् तत्रानुदात्तेऽधः ( हृदि ) हस्तस्य न्यासः । स्वरितोदात्ताः क्रमादिति वचनेन स्वरि-तस्यानुदात्तीभूतस्यैव ग्रहणम् । अन्यथा स्वरितोदात्ता इत्यत्रोदात्त-ग्रहणं व्यर्थं स्यात् । एवम् 'य॒स्मि॒न्नृच॒; साम॒यजू॑ᳪषि ' ( शु० य० सं० ३४।५ ) इत्यत्र यकारोत्तरोदात्ताऽकारस्याऽनुदात्ते, सकारम-कारोत्तरवर्त्तिनि इकारे परे उच्चारणसमये हस्तस्य वामतो न्यासः । सकारमकारोत्तरवर्त्तिन अनुदात्तेकारस्योच्चारणकाले च नकार-द्वयोत्तरवर्त्तिन उदात्तस्य ऋकारस्य चकारोत्तरवर्त्त्यनुदात्तस्य अकारस्य च सत्वात् दक्षिणतो हस्तस्य न्यासः । पुनरुदात्तस्य ऋकारस्योच्चारणकाले हस्तस्य वामतो गमनम् उत्तरत्र चकारो-त्तराकारस्याऽनुदात्तस्य सत्वात् । चकारोत्तराऽनुदात्ताऽकारस्यो-च्चारणे हस्तस्य दक्षिणतो गमनम् उत्तरत्राऽनुदात्तपरकोदात्तस्य सकारोत्तराऽऽकारस्य विद्यमानत्वात् । भूयः उदात्ताकारस्योच्चारणा-वसरे हस्तस्य वामे स्थितिः उत्तरत्राऽनुदात्तस्य वर्त्तमानत्वात् । भकारोत्तराऽकारस्याऽनुदात्तस्य तूच्चारणवेलायां परत्राऽनुदात्तपरको-दात्तस्याऽभावात् हस्तस्याऽधोयानम् न दक्षिणतः । इत्थमत्र हस्तस्य वारत्रयं वामतो वारद्वयं च दक्षिणतो गमनं संभूय नीचोच्चं पर्यायेण उदात्ताऽनुदात्तयोर्भवति । इत्याद्यूह्यमन्यत्रापि ॥

किञ्चाऽनुदात्तानामनुदात्ते परे हस्तदर्शने यद् वैशिष्टयं तदाह—

**उच्चादुच्चतरं नास्ति नीचान्नीचतरं तथा ॥ ५८ ॥**

अक्षरात्तुल्ययोगाच्च नीचे नीचगतानि च ॥

अक्षरादिति । तुल्ययोगादक्षरात् अनुदात्तात् इत्यर्थः । च पुनः । नीचे अनुदात्ते परे । नीचगतानि अनुदात्तानुगतानि उदात्तमयानीति यावत् । भवन्तीति शेषः । अन्तिममनुदात्तं प्रतीक्षमाणाः पूर्वेऽनुदात्ताः हस्तेन मध्ये एव प्रदर्श्यमाणाः तिष्ठन्ति प्रचयवत् इति भावः । अत्र हेतुमाहः उच्चादिति । यतः– माध्यन्दिनानाम् । उच्चात् उदात्तात् । उच्चतरम् एतन्नामकं भिन्नं स्वरं किञ्चित् नास्ति । तथा । नीचात् अनुदात्तात् । नीचतरम् तदाख्यमन्यत्स्वरं किमपि नास्ति । अतोऽन्तिममनुदात्तं यावत् पूर्वं स्थितेषु अनुदात्तेषु उच्चार्यमाणेषु मध्ये एव हस्तः प्रदर्शनीयः प्रचयवत् । यथा-गायत्री' (शु० य० सं० २३।३३) इत्यत्र गकारोत्तरवर्ती आकारो हस्तेन प्रदर्श्यमाणो मध्ये एव तिष्ठति, यकारोत्तरवर्त्यकारो दक्षिणे न्यस्यते । तथा-'सुषारथिरश्वा' ( शु० य० सं० ३४।६ ) इत्यत्र सुषेत्यक्षरद्वयमनुदात्तत्वविशिष्टं हस्तेन प्रदर्श्यमाणं मध्ये तिष्ठति । अन्त्योऽनुदात्तोऽनुदात्तपरत्वाभावात् मध्ये न तिष्ठति, किन्तु नीचैः क्रियते । अनेकेष्वनुदात्तेष्वव्यवहितेषु इयम् व्यवस्था । उदात्तात्तरेष्वनेकेषु तु तथाविधेषु सर्वेष्वेव हस्तस्य भ्रूप्रदेशे स्थितिरौत्सर्गिकी ज्ञेया विशेषाऽनवगमात् उच्चातिरिक्तस्य उच्चतरस्य माध्यन्दिनानां प्रतिषेधनाच्च ॥

अथोदात्तानुदात्तौ विशिष्य स्वरितं विशिंषन् प्रचयविधिन्तावदाह—

स्वरितादनुदात्ता[2] ये प्रचयांस्तान्[3]प्रचक्षते ॥ ५९ ॥
एकस्वरानपि च तानाहुस्तत्वार्थचिन्तकाः ॥

---

१ अक्षराणि च तुल्यानि प्रचितान्युच्चगानि च ( चकारान्नीचगानि च ) । इति ग० च० ॥

२ तादुत्तरे ये च प्रचयास्तान्प्र ग० ॥ तादुत्तरेयेऽत्र ( अत्र स्वरितोपान्ते ) च० ॥
३ यास्ता क, ख० । यस्ता घ० ॥

तत्वार्थचिन्तकाः आचार्याः । स्वरितात् । अग्रे । ये । अनुदात्ताः । तान् । प्रचयान् । प्रचक्षते कथयन्ति । अपि च । तान् स्वरितादुत्तरे पठितान् अनुदात्तान् । एकश्रुतीः । वदन्ति आहुः । यथा-'गणानांन्त्वा' (शु० य० सं० २३।१९) इत्यत्र स्वरितात्परस्य त्वेत्यनुदात्तस्य प्रचयत्वम् । तथा हि प्रातिशाख्यम्-'स्वरितात्पर-मनुदात्तमुदात्तमयम् । अनेकमपि । नोदात्तस्वरितोदयम्' (शु० य० प्रा० ४।१३९-१४१) इति । अत्रोदात्तमयमिति प्राचुर्ये मयट् । तेन अनुदात्ते बाहुल्येन उदात्तत्वस्य विधानात् किञ्चिदनुदात्तत्वमपि-शिष्यते । अत एव स्वरितवत् प्रचयेऽपि हस्तप्रदर्शने "प्रचयं नासिकाग्रतः" (या० शि० व० प्र० ५५) इति, "कर्णमूले स्वरितः" (का० प० प्र० सू० १।) इति च मध्ये नासिकाग्रे स्थितिरुक्ता संगच्छते ॥ उदात्तमयम् प्रचितम् । प्रचितः प्रचयः-प्रचः निचितः निचयः तानः एकश्रुतिः एकस्वरः इत्यनर्थान्तरम् ॥

अथास्यपरत्वे स्वरितं विशिनष्टि-

## प्रचयो[1] यत्र दृश्येत तत्र हन्यात्स्वरं बुधः ॥६०॥

स्वरितात्परो यत्र प्रचयो दृश्येत तत्र बुधो वैदिकः । अत्र प्रचयग्रहणेन स्वरान्तराभावोलक्ष्यते तेन अवसानमपिगृह्यते । स्वरं स्वरितस्वरम् । हन्यात् वेगेन पातयेत् । मुखतो हस्ततश्च इति शेषः । यथा-"गणानांन्त्वा" (शु. य. सं. २३।१९) इत्यत्रनकारोत्तरवर्त्तिनः आकारस्य स्वरितस्य वेगेन पातः । ततः परस्य त्वेति प्रचयस्य विद्यमानत्वात् । तथा-"आकूतं ÷ सह" (शु. य. सं. ३४।४९) इत्यत्र विसर्गात्मकेऽवसानेऽपि ॥ ६० ॥

प्रचयपरत्वाभावे केवले स्वरिते तु मृदुत्वं विधत्ते—

## स्वरितः केवलो यत्र मृदुं[2] तत्र निपातयेत् ॥

स्वरित इति —यत्र केवलः प्रचयपरत्वरहितः । स्वरितः । स्यादिति शेषः । तत्र । स्वरितं स्वरं मृदुं यथास्यात्तथा । मुखतो

१ या यत्र दृश्यन्ते ग० । २ मृदुस्तत्र क, ख, च० ।

हस्ततश्च । निपातयेत् उच्चस्थानात् मध्ये आनयेत् । यथा—"पुरुष॑ः पादो॑ऽस्ये ( शु० य० सं० ३१।४ ) त्यत्र रेफोत्तरस्थोकारस्य स्वरितस्य मृदुः पातः । ततः परे अनुदात्तस्य स्वरान्तरस्य सत्वात् ॥

एवं हस्तेन प्रदर्शनम् उक्त्वा अधुना तदवयवेन दर्शनस्थलान्याह—

**मुष्ट्याकृतिर्मकारे स्यान्[1] नकारे तु नखग्रहः ॥६१॥**

प्रत्यवसानगतेऽर्धमात्रिके मकारे हस्तस्य मुष्ट्याकृतिः स्यात् । यथा—'गणानांन्त्वा०—धम्' ( शु० य० सं० २३।१६ ) इत्यादौ । एतत्प्रदर्शनं तु मकारस्य व्यञ्जनत्वसूचनाय । यतोऽवसाने द्विमात्रो विरामो व्यञ्जनस्य द्वित्वम् ओष्ठयोर्विश्लेषं च कृत्वा पाणिनि-याज्ञवल्क्याभ्यां विहितः " ऋचोऽर्धेत्विति ( या० शि० स्व० प्र० १४ ) कारिकाविवरणे मया प्रदर्शितश्च । तत्र मकारद्वयोच्चारणानन्तरमोष्ठयौ विशृज्य मात्राद्वयविरामेण व्यञ्जनमकारस्य सस्वरश्रुतेरवभासात् । एवमुत्तरत्र नकारककारादिष्वपि बोध्यम् । नकारे तु अवसानगते नखग्रहः । तर्जन्याः नखस्य अङ्गुष्ठेन स्पर्शः कार्यः इत्यर्थः ।यथा—'सहस्तो'० श्स्मीन्' (शु. य. सं. ३४।४६) इत्यादौ ॥६१॥

**कं[3]कारान्ते टकारान्ते ङणे तर्जनिकां नमेत् ॥**
**पञ्चाङ्गुल्यम्पकारे[4] च तकारे कुण्डलाकृतिः ॥६२॥**

ककारान्ते । टकारान्ते । अवसानगतस्वरे इति शेषः । एवम् । ङणे ङकार-णकारविशिष्टे अवसानगतस्वरे । ङणइत्यत्र समाहारद्वन्द्वः । तर्जनिकाम् देशिनीम् । अङ्गुष्ठसमीपस्थामङ्गुलीमिति यावत् । नमेत् रेफाकारेण दर्शयेत् । नमेदिति अन्तर्भावितणयर्थः । च पुनः । पकारे पकारविशिष्टेऽवसानगतस्वरे पञ्चाङ्गुल्यम् । कुर्यादिति

---

१ एतत् पद्यार्धम् 'अनुस्वारेङ्गुलिक्षेप ऊष्मान्तेङ्गुलिमोक्षणम्' इत्युत्तरार्धाधिकेन सह ५१त्याः पूर्वार्धाग्रे पठितम् क, ख, घ० ॥ ग० तु ५७त्याः पूर्वार्धाग्रे 'अभ्यासार्थं इति कारिकाद्वयं प्रपद्य पठितम् ॥

२ तु ङातिरिक्तः पाठः । तु नखाग्रतः । अनुस्वारेङ्गुष्ठक्षेपः ख० । ङ्गुष्ठपातः क, घ० ॥

३ इतः प्रभृति ८६तीपर्यन्तः पाठस्तु ग—ङातिरिक्तेपु ५७त्याः पूर्वार्धाग्रेधृतः ॥

४ ल्यमका ख, घ० ॥

शेषः । पञ्चाङ्गुलीनामेकत्र संकोचः कार्यः इत्यर्थः। तकारे तकारविशिष्टे अवसानगत स्वरे । कुण्डलाकृतिः अङ्गुष्ठेन तर्जन्युत्तमपर्वसंसर्गात्मिका दर्शयितव्या । क्रमेणोदाहरणानि यथा-ककारे "अद्धचंवोच० पक्" (शु. य. सं. १८।५) इत्यादौ । टकारे—"सण्ऽस्रव०ब्वाट् (शु. य. सं. २।१८) इत्यादौ । ङणयोस्तूदाहरणे पदपाठतो ज्ञेये । तथाहि-ङकारे यथा— "दध्यङ्" (शु. य. प. ११।३०) इत्यादौ । णकारे यथा— "वृषण्वसू इति वृषण्" (शु. य. प. ११।११) इत्यादौ पकारेयथा— "गायत्री त्रिष्टुप्" (शु. य. सं. २३।३३) इति प्रतीकोदाहरणम् । तकारे यथा—"सह०रात्" (शु. य. सं. ३१।१) इत्यादौ ॥ ६२ ॥

इत्थं व्यञ्जनविशेषान्ताऽवसानस्वरे हस्तावयवैः तत्तद्व्यञ्जनप्रदर्शनमुक्त्वा संप्रति ऊष्मविशेषस्थले अङ्गुलिक्षेपविधिमाह—

**ऊर्ध्वक्षेपाच्च योष्मा स्यादधः क्षेपाच्च या भवेत् ॥**
**एकैकामुत्सृजेद्धीरः स्वरिते तूभयं क्षिपेत ॥ ६३ ॥**

ऊर्द्ध्वक्षेपादिति । ऊर्द्ध्वं क्षेपो यत्र तस्मादुदात्तात् । परा या ऊष्मा विसर्गः । स्यात् । च पुनः । अधः नीचैः क्षेपो यत्र तस्मादनुदात्तात् प्रचयाद्वा । परा या ऊष्मा विसर्गो भवेत् । तदा । तस्या उच्चारणकाले । धीरो विद्वान् । स्वस्थचित्तः इति यावत् । एकैकाम् एकामेकामङ्गुलीम् । उत्सृजेत् स्वयूथाद्वहिर्निः सारयेत् । तत्रायं विवेकः । उदात्तात्परस्मिन्नूष्मणि दृष्टे सर्वासामङ्गुलीनां संकोचं कृत्वा तर्जनीमेकां स्वयूथाद्बहिर्निः सारयेत् । तर्जन्याः प्रथमोपस्थितत्वात् । यथा—"ततोव्विराडंजायत० पुरुः (शु० य० सं० ३१।५ ) इति । अधः क्षेपात्परस्मिन्नूष्मणि दृष्टे सर्वासां संकोचं कृत्वा कनिष्ठां केवलां स्वयूथाद्वहिर्निःसारयेत् । वक्ष्यमाणोभयक्षेपे कनिष्ठायाश्च संग्रहात् पारिशेष्याच्च । यथा—"त्रिपादूर्द्ध्वऽउदैत्पुरुषः (शु० य० सं० ३१।४) इत्यनुदात्तात् । सहस्रशीर्षापुरुषः (शु० य० सं० ३१।१) इति प्रचयात् च । 'अधः क्षेपादित्युक्त्या स्वरितेऽपिकनिष्ठिकाक्षेपे प्राप्ते अपवादमाह— स्वरिते त्विति । स्वरिते स्वरितात्परे विसर्गे दृष्टे ।

तु पुनः । उत्तरत्रोभयक्षेपलक्षणवाक्यैकवाक्यतया । उभयम् तर्जनीक-निष्ठिके इति द्वयम् । क्षिपेत् वत्सशृङ्गवत् त्यजेत् ॥ ६३ ॥

एवमूष्मणि उदात्तानुदात्तस्वरितेभ्योऽङ्गुलिमोक्षणं विविक्तम् अधुना तर्जनीप्रसाराधिकरणं परिगणयन्ननुस्वारप्रसक्त्या तदेव पूर्वं विशिनष्टि ।

**अङ्गुष्ठाकुञ्चनं लघावनुस्वारे त्वपाꣳरसम् ।**
**दीर्घे रङ्गे च तर्जन्याः प्रसारः परिकीर्तितः ॥ ६४ ॥**

"अपाꣳरसम्" ( शु० य० सं० ९।३ ) इत्यत्र यथा । लघावनुस्वारे वक्ष्यमाणलक्षणेꣳकारे । अङ्गुष्ठाकुञ्चनम् । तर्जनीपृष्ठे कार्यमिति शेषः । लघाविति गुरोरप्युपलक्षणम् । तथाहि—" दीर्घे तु देशिनी त्याज्या क्षिप्रं स्याद् द्विलके ( गुरौ इत्यर्थः ), लघौ ( ह्रस्वे चेत्यर्थः ) " क्षिप्रलक्षणं च—" तर्जन्याः पृष्ठसंश्लिष्टमङ्गुष्ठं चाग्रनामितम् । तं वै क्षिप्रं विजानीयात् स्वरविद्भिरुदीरितम् " ( म० श० शि० २७।२८ ) इति । एतेन संयोगाद्येऽनुस्वारे वक्ष्यमाणलक्षणे गुरौ, लघौ च तर्जनीपृष्ठेऽङ्गुष्ठाग्रप्रक्षेपः सिद्धः ॥ लघ्वनुस्वारोदाहरणन्तु दर्शितम् । गुरोरनुस्वारस्योदाहरणं मूले एव दर्शयिष्यते " सꣳस्थामिति ॥ दीर्घेऽनुस्वारे वक्ष्यमाणलक्षणे ठंकारे । यथा—"गणपतिठं हवामहे" ( शु० य० सं० २३।१९ ) इति । रङ्गेऽर्धानुस्वारे वक्ष्यमाणलक्षणे सार्धद्वयङ्कयुते सार्धैकाङ्कयुते च द्विविधेऽपि । यथा "लोकाँ॥ऽअकल्पयन्" ( शु० य० सं० ३१।१३ ) इति । "जहिशत्रूँ॥रप" ( शु० य० सं० ७।३७ ) इति च । चकारादुदात्तात्परस्मिन्नूष्मणि । यथा—"सहस्राक्षः" ( शु० य० सं० ३१।१ ) इत्यत्र विसर्गे ॥ तर्जन्या अङ्गुल्याः । प्रसारः परिकीर्तितः । तथा च मल्लशर्मकृतशिक्षायाम्—स्वरितेभ्यः क्रमेणैव दक्षिणोत्तरगामिनी । कनिष्ठा तर्जनी चैव त्याज्या तूर्ध्वे हि देशिनी । अनुदात्तयुते, ह्रस्वे सस्वराच्च ( स्वरितस्वरविशिष्टाच्च ) परेऽपि वै । सुज्ञैः कनिष्ठिका त्याज्या सविसर्गे द्विजोत्तमैः । ( म० श० शि० २४,२५ ) इति । तेनाधःक्षेपादूष्मणि कनिष्ठिकामोचनं फलितं व्याख्यातं चास्माभिः पूर्वस्मिन् पद्ये । किं च 'कनिष्ठिकामोचनं तु नीचे च प्रचये सति ।

"नम॑ऽ कूप्या॑य" ( शु० य० सं० १६।३८ ) प्रथमो" द्वितीयो "जाग्र॑त॒ऽ" ( शु० य० प० ३४।१ ) तथा ॥ ६४ ॥

अथ तर्जनीप्रदर्शनपरः आचार्यः याजुषं तर्जन्यधिकरणं परिगणय्य यतश्चयनयज्ञे " नान्योऽध्वर्योर्गायेदिष्टका वा एता विहितचितो ह स्याद्यदन्योऽध्वर्योर्गाये " दिति शातपथे नवमे सञ्चिति काण्डे श्रुत्याऽध्वर्योर्याजुर्वैदिकस्यापि सामगानं विहितम् अतो याजुष्यामपि अस्यां शिक्षायां तत्संबन्धि सामवेदीयस्वरप्रदर्शनार्थमङ्गुलिचालनमपि प्रसक्तम् निर्दिशति—

## तर्जन्यङ्गुष्ठयोः स्पर्श उदात्तम्प्रति पद्यते ।
## नीचन्तु मध्यमां कुर्याच्छेषं नीचतरं क्रमात् ॥६५॥

सामवेदे ये षड्जादयः सप्तस्वराः " क्रुष्ट-प्रथम-द्वितीय-तृतीय-चतुर्थ-मन्द्रा-तिस्त्रार्याः (तै० प्रा० २३।१२) इतिवा प्रसिद्धास्तेषामुदात्तादिषु अन्तर्भावः या० शि० स्व० प्र० ७ म्या कारिकया उक्तस्तत्र । उदात्तं प्रति निषादगान्धारयोः स्वरयोः । तर्जन्यङ्गुष्ठयोः । स्पर्शो विद्यते । नीचं प्रति । तु । ऋषभधैवतयोस्तु स्वरयोः । मध्यमामङ्गुष्ठस्पृष्टां कुर्यात् । शेषं स्वरितं षड्जं मध्यमं च क्रमात् नीचतरं कुर्यात् । अनामिकां कनिष्ठिकां कनिष्ठिकामूलं च स्पृशेदित्यर्थः ॥ नारद्यां तु—

अङ्गुष्ठस्योत्तमे क्रुष्टो ह्यङ्गुष्ठे प्रथमः स्वरः ।
प्रदेशिन्यां तु गान्धार ऋषभस्तदनन्तरम् ॥
अनामिकायां षड्जस्तु कनिष्ठिकायां च धैवतः ।
तस्याधस्ताच्च योन्यास्तु निषादं तत्र विन्यसेत् ॥ (ना.शि.१७।३,४)

इति एषां परिचयोऽप्याह स एव—

"यः सामगानां प्रथमः सवेणोर्मध्यमः स्वरः ।
यो द्वितीयः स गान्धारस् तृतीयस्त्वृषभः स्मृतः ॥
चतुर्थः षड्ज इत्याहुः पञ्चमो धैवतो भवेत् ।
षष्ठो निषादो विज्ञेयः सप्तमः पञ्चमः स्मृतः" (ना०शि० १।४।१,२)

इति । अन्य एव प्रकारः । स च शाखाभेदेन आर्चिकादिभेदेन वा व्यवस्थापनीयः । एवम् " उदात्तमाख्याति वृषोऽङ्गुलीनामित्यादि० ष्ठिकाम् " इत्यन्तः ( पा० शि० ४३-४४ ) पाणिन्युक्तोऽपि भिन्नरूपो व्यवस्थापनीयः ॥ ६५ ॥

इत्थं प्रसक्तानुप्रसक्त्या सामिकं निर्दिश्य पुनः प्रक्रान्तम् "स्वरिते तूभयं क्षिपेदिति (या० शि० स्व० प्र० ६३) विविनक्ति—

स्वरितं यद्भवेत्किञ्चित् संवकारोष्मकं ततः ॥
ह्रस्वं वा यदि वा दीर्घं निक्षेप उभयोरपि ॥ ६६ ॥

" स्वरिते तूभयं क्षिपेदिति सामान्योक्त्या सर्वत्रोभयक्षेपे प्राप्ते नियमयति स्वरितंयदिति । यत्किञ्चित् सवकारोष्मकम् वकारविसर्गाभ्यां सहितम् ह्रस्वम् । वा । यदि । वा । दीर्घम् । स्वरितम् स्वरितत्वविशिष्टमक्षरम् अननुदात्तपूर्वम् । उत्तरत्र जात्योक्त्या नीचपूर्वस्य विवक्ष्यमाणत्वात् । भवेत् । ततः तस्मादक्षरात् परे विसर्गे दृष्टे उभयोरपि तर्जनीकनिष्ठिकयोरेव । निक्षेपः स्वयूथात् वहिस्त्यागः । कार्य इतिशेषः । यथा—"दे॒वोव॑ ÷ स॒वि॒ता" ( शु० य० सं० १।१ ) इति ह्रस्वस्य । "अ॒ति॒विश्श्वा॑ ÷ परावतः" ( शु० य० सं० १२।८४ ) इति दीर्घस्य च ॥ ६६ ॥

किञ्च वकाररहित-सोष्म-स्वरितत्वविशिष्टदीर्घे[1] विशेषमाह—

स्वरिते यत्र[2] निक्षिप्ते संयोगो वाऽपि[3] दृश्यते ।
द्विमात्रिके क्षिपेदेकाम्

स्वरित इति । यत्र । स्वरिते । पूर्वत्र सवकारोक्त्याऽत्र वकाररहित-सोष्म-स्वरितत्व विशिष्टाक्षरं गृह्यते । तेन तथाविधे अक्षरे इत्यर्थः । निक्षिप्ते स्वरितावयवानुदात्तस्य उच्चारणद्वारा अधःक्षेपे सति । यदि ततोऽग्रे । संयोगो दृश्यते । अपि वा न दृश्यते । एतेनोष्मभेदने स्वरितगुरुत्वं न प्रयोजकं किन्तु ह्रस्वदीर्घौ एवेति सूचितम् । तथाहि—द्विमात्रिके वकाररहित-सोष्म-स्वरितत्वविशिष्टे

---

१ वकारसहसंयुतम् । त्रिरङ्गुलं ततो नीचं कृत्वाप्रासारयेद् बुधः ॥ इति पाठं परिवर्त्य 'स्वरितसंज्ञे निक्षिप्ते संयोगो यत्र दृश्यते । ऊष्माणं तं विजानीयान्निःक्षेपादुभयोरपि' इत्यधिका पठिता । एषा तु स्वरूपेणाग्रे पठिता ग०

२ समभिक्षि ग० । किं चेयं ६६ छ्याः पूर्वं पठिता ग० ॥

३ यत्र ग० ॥

दीर्घे अक्षरे । एकाम् कनिष्ठिकामेव केवलाम् । अधः क्षेपेऽस्या एव व्यवस्थापितत्वात् । क्षिपेत् त्यजेत् । तथा च—"स्वारे दीर्घे कनिष्ठिकाम्" (ल० मा० शि० २५) इति यथा—"व्वसोः पवित्रम्" (शु० य० सं० १।२) इति संयोगपरत्वाभावे । संयोगपरत्वे गुरौ यथा—"आश्रावयेति स्तोत्रियाः प्रत्याश्रावः" (शु० य० सं० १९।२४) इति ॥

वकाररहित-सोष्म-स्वरितत्वविशिष्टह्रस्वे तु—

मात्रिके तूभयं क्षिपेत् ॥ ६७ ॥

मात्रिके त्विति । मात्रिके तथाविधह्रस्वेऽक्षरे । तु पुनः । उभयम् । तर्जनीकनिष्ठिके इति द्वयमेव क्षिपेत् मुञ्चेत् । नियमान्तरमेतत् ॥ यथा—"तन्मे मनः शिवसंकल्पमस्तु" (शु० य० सं० ३४।१) इति संयोगपरत्वाभावे । संयोगपरत्वे यथा—"मूर्द्धा व्वयः प्रजापतिः" (शु० य० सं० १४।९) इति । वकारविशिष्टेऽपि सोष्मस्वरितत्वयुते संयोगपरत्वाऽविशेषेण ह्रस्वदीर्घयोरुभयत्र 'ह्रस्वं वा यदि वा दीर्घ (या० शि० स्व० प्र० ६६) मिति, 'संयोगो वापि दृश्यते (या० शि० स्व० प्र० ६७) इति च सामान्येनोक्तेः उभयोरेवक्षेपः फलितः । संयोगपरत्वाभावे तूदाहरणे प्रदर्शिते एव ६६ तम्यां कारिकायाम् संयोगपरत्वे ह्रस्वे यथा—"सवितुर्व्वः प्रसवे" (शु० य० सं० १।१२) इति । तथाविधे दीर्घे यथा—

इत्थम् अनुदात्तपूर्वं स्वरितमूष्मणि विविच्य जात्याख्यं नीचपूर्वं न्युन्जापरपर्यायं सवकारमेवोभयक्षेपे प्रयोजकमित्याह—

जात्ये च स्वरिते चैव वकारो यत्र दृश्यते ।
कर्तव्यस्तूभयोः क्षेपो व्वायव्यां (शु. य. सं. २४।१९) इति दर्शनम् ॥ ६८ ॥

---

१ व्यै (शु० य० सं० १९।२६) रि ग० । व्य (शु० य० सं० २४।१) इति घ० ॥

यत्र । च पुनः । जात्ये७८ त्या वक्ष्यमाणसंज्ञके न्युब्जापरपर्य्याये। साधारणस्य तु पूर्वत्रैव ( या० शि० स्व० प्र० ६६ ) उक्तेः । स्वरिते स्वरितत्वयुते सविसर्गाक्षरे । च यदि । एवकारो भिन्नक्रमो वकारस्य नियतसंबन्धसूचनार्थश्च । तेन । वकारएव अवश्यंवकारयोगः इत्यर्थः । दृश्यते भवति । तुकारोऽवधारणार्थः। तत्रैव सवकार-सोष्म-जात्याभिध-स्वरिताक्षरे । उभयोः तर्जनीकनिष्ठिकयोः । क्षेपः विमोकः । कर्त्तव्यः विधेयः । नान्यत्र । वकाररहिते सोष्म-जात्य-स्वरिताक्षरे "सदस्यैः" ( शु० य० सं० ७।४५ ) इत्यादौ । जात्यग्रहणेनैव वकारे सिद्धे पुनः वकारग्रहणं जात्यप्रयुक्तयकारयोगस्योभयक्षेपे प्रयोजकत्वाभावं सूचयति यकारयोगः स्यान्नवेति । उत्तरत्र ( या० शि० स्व० प्र० ७० त्यां ) निष्कर्षवचने पुनर्वकारस्यैवाभिधास्यमानत्वाच्च । तथा हि उदाहरन्नाह—" स्वायक्ष्या÷ " ( शु० य० सं० २४।१६ ) इति दर्शनम् उदाहरणम् । ज्ञेयमिति शेषः । यत्तु " जात्ये च स्वरिते चैव यकारो दृश्यते यदि । कर्त्तव्य उभयोः क्षेपः " सदस्यै ( शु० य० सं० ७।४५ ) रिति दर्शनम् " इति वचनं यकारस्य जकारोच्चारणविधिप्रकरणे क्वचित्पुस्तके इमां ( या० शि० स्व० प्र० ६८ ) कारिकां पुनः पठित्वा प्रक्षिप्तम् तन्निर्मूलत्वादुपेक्षणीयम् । एष एवार्थः "उभयोरपि ह्रस्वे च वकारे स्वरिते सति । दीर्घेऽपि चोभयोः क्षेप इति शास्त्रव्यवस्थिति" ( ल० मा० शि० २५, २६ ) रिति निष्कर्षमभिवदतः लघुमाध्यन्दिनशिक्षाकारस्याप्यभिप्रेतः ॥ ६८ ॥

अथ प्रक्रान्तमुभयक्षेपं लक्षयन्नाह—

**शृङ्गवद् बालवत्सस्य कुमारीकुचयुग्मवत् ।**
**उभक्षेपः स्वरो यत्र सविसर्ग उदाहृतः ॥ ६९ ॥**

यत्र ह्रस्वे स्वरितत्वसामान्यविशिष्टे,सवकारजात्यविशिष्टे दीर्घे च। सविसर्गः ऊष्मणा सहितः । स्वरः स्वरितः । उभक्षेपः उभयोः क्षेपणविशिष्टः । उभक्षेप इत्यत्र आर्षत्वादयजभावः । उदाहृतः विहितः । तत्र । तर्जनीकनिष्ठिकयोरित्युभयोरेव मोचनं नान्ययोरिति दृष्टान्तदर्शनेन नियमयति—शृङ्गवदिति । बालवत्सस्य अप्राप्ततारुण्यतर्णकस्य । शृङ्गवत् सान्तरालशृङ्गोत्पत्तितुल्यम् । क्षेपः कर्त्तव्य इति

शेषः । तदेव च दृष्टान्तान्तरेण द्रढयति—**कुमारीति** । कुमार्याः अप्राप्तवयस्कायाः, कुचयोः स्तनयोः, युग्मम् द्वयम् । मध्ये अन्तरालं दत्वा उत्पद्यते इति शेषः । तेन तुल्यम् । उभयक्षेपः कर्त्तव्य इत्यत्रापि योज्यम् । यथा वत्सशृङ्गयोः कुमारीस्तनयोर्वा मध्येन्तरालं तथोभयोरङ्गुल्योर्मध्येऽप्यन्तरालं यथा स्यात् तथा क्षेपः करणीय इति भावः । एवं विध उभयक्षेपस्तर्जनीकनिष्ठिकयोरेव मोचने सम्भवति, इति उभयक्षेपे ते एव ग्राह्ये ॥

अन्यत्र विसर्गलिपिपरिचयोऽनेन ध्वनितः । यथा बालवत्सस्य शृङ्गे कुमार्याः कुचद्वयं वा, एवं यत्र पदे । स्वरः अक्षरम् । उभौ द्वौ क्षेपौ बिन्दुपातौ यस्मिन् तथाविधः । सविसर्ग उदाहृतः । यत्र स्वरस्याग्रे बिन्दुद्वयमुपलभ्येत तत् विसर्गत्वेन परिचेयमिति भावः । तेनापि द्वयोर्मध्येन्तरालो द्योतितो भवति ॥ ६९ ॥

अधुना उभयक्षेपे स्वरस्थलं निष्कृष्य दर्शयति—

**विसर्गान्तः स्वरो ह्रस्वः स्वरितो यत्र दृश्यते ।**
**दीर्घस्तु सवकारश्च तत्रोभक्षेप उच्यते ॥ ७० ॥**

यत्र । स्वरितः स्वरितत्वसामान्ययुतः तेन जात्योऽपि गृहीतः । ह्रस्वः एकमात्रिको गुरुभूतोऽगुरुभूतो वा निर्वकारः सवकारो वा सामान्येन अग्रे 'दीर्घस्त्विति व्यवच्छेदनादयमर्थो लभ्यते । विसर्गान्तः ऊष्मविशिष्टः । स्वरः अक्षरम् । दृश्यते लभ्यते । तत्र । उभक्षेपः पूर्वोक्तः । उच्यते करणीयत्वेन विधीयते । दीर्घः तथाविधः स्वरः । तु पुनः । सवकारः वकारेणसहितश्चेत् तदा । च तथैवउभयक्षेपार्हो भवतीत्यर्थः । अत्रापि जात्योऽजात्यो वा गुरुभूतोऽगुरुभूतोवेत्यविशेषेण ज्ञेयम् । इति पूर्वेषां वचनानां निष्कृष्टोऽर्थः अनेन वचनेन प्रतिपादितः । अन्यथा इदं वचोऽनर्थकमेव स्यात् । ६९ प्रभृति कारिकात्रयेणैव गतार्थत्वात् ॥ ७० ॥

अथोष्माङ्गुलिक्षेपमुपसंहरन् ऊष्मभेदं दर्शयति—

**त्रिविधा तु भवेदूष्मा प्रचिता बलका तरा ।**
**स्वरिते प्रचितां विद्यान् निपाते बलकां विदुः ॥७१॥**

---

१ घस्तु घ० । धात्र च० ।

उत्थाने तु तथा तारा मेताभिस्त्रिभिरूष्माभिः ।
मात्रामादौ विदित्वा तु ततः क्षेपं प्रयोजयेत् ॥७२॥

त्रिविधेति—तु पुनः । ऊष्मा विसर्गः । प्रचिता १ । बलका २ । तरा ३ । इति नामतः । त्रिविधा त्रिप्रकारकः । भवेत् भवति । कुत्र किंनाम्नी इत्याकाङ्क्षायामाह—स्वरिते प्रचितेति । स्वरिते ह्रस्वे, सवकारे दीर्घेऽपि स्वरितसामान्यविशिष्टेऽव्यवहितपूर्वे सति । प्रचिताम् एतन्नाम्नीम् । विद्यात् जानीयात् । निपाते अनुदात्ते, जात्य-प्रचयाद्यन्यतम-स्वरितसामान्यविशिष्ट-वकाररहितदीर्घेचाऽव्यवहितपूर्वे सति । बलकाम् तदाख्याम् । विदुः जानन्ति । आचार्याः इति शेषः । तु पुनः । उत्थाने उदात्ते स्वरेऽव्यवहितपूर्वे सति । तरा एव तारा ताम् तदभिधायिनीम् । तथा आचार्याः विदुरित्यर्थः । तु पुनः । एताभिः प्रचितादिभिः । त्रिभिरिति पुंस्त्वमार्षम् । त्रिविधाभिरित्यर्थः । ऊष्मभिः विसर्गैः । उपलक्षिते वर्णे । आदौ प्रथमम् । मात्राम् उभयक्षेपप्रयोजिकां ह्रस्वदीर्घान्यतराम् । वकारघटितामघटितां वा विदित्वा ज्ञात्वा । एतच्च मात्राज्ञानं प्रचितायामेव । तत्रैव विशिष्योक्तेः । ततः क्षेपप्रयोजकस्वरज्ञानानन्तरम् । क्षेपम् उभयक्षेपम् । प्रयोजयेत् विदधीत । अर्थात् यत्र कुत्रापि स्वरिते उभयक्षेपिकां प्रचितां न विद्यात् किन्तु ह्रस्वे, वकारविशिष्टे दीर्घे च जात्याद्यन्यतमे स्वरिते एव उभयक्षेपिकां प्रचितां जानीयात् । अन्यत्र तु बलकामेव "स्वारे दीर्घे कनिष्ठिकाम्" ( ल. मा. शि. २५ ) इति वचनात् बुध्येत ॥ ७१ ॥ ७२ ॥

इत्थं हस्तचालनमुपसंहृत्य ऊष्मप्रसङ्गात् तत्स्वरूपभेदानाह—

अक्षरं भजते काचित् काचिद् द्वित्वे प्रतिष्ठिता ।
समानजातिका काचित् काचिदूष्मप्रदायिनी ॥७३॥

अक्षरमिति । काचित् । ऊष्मा विसर्गः । अक्षरम् ओत्वं श-ष-स-रेफान्यतमत्वं च । भजते प्राप्नोति । क्रमेणोदाहरणानि

---

१ ए घ० । उत्थिते तु तथा तारामेतास्तिस्रस्तथोष्मणाम् च० ।
२ ष्मा घ० ॥

यथा—"कुक्कुटोसि" (शु.य. सं. १।१६) इत्यत्रोभयतो ह्रस्वस्य विसर्गस्य कुक्कुटः + असीत्यवस्थायाम् 'अतो रोरप्लुतादप्लुते' (पा० ६।१।११३) इत्युत्वे 'आद्गुणः' (पा०६।१।८७) इति गुणे ओभावस्य। एवम् " देवोवं ÷ ( शु. य. सं. १।१ ) इत्यत्रापि हशि परे विसर्गस्य देवः व इत्यवस्थायाम् " हशिच " ( पा० ६।१।११४ ) इत्युत्वे गुणेन च ओभावस्य। " प्रजापतिश्छन्दं ÷ " ( शु. य. सं. १४।६ ) इत्यत्र प्रजापतिः + छन्द इत्यवस्थायाम् विसर्गस्य 'विसर्जनीयस्य सः' ( पा० ८।३।३४ ) इति सत्वे 'स्तोः श्चुना श्चुः' ( पा० ८।४।४० ) इति श्चुत्वेन च शभावस्य। " अग्ग्नेष्ट्वा + " (शु० य० सं० १३।१३) इत्यत्राग्नेः + त्वेत्यवस्थायाम् सत्वे " ष्टुनाष्टुः " ( पा० ८।३।४१ ) इति ष्टुत्वेन च षभावस्य। "अग्ग्नेस्तनूरसि" (शु० य० सं० १।१५) इत्यत्राग्नेः + तनूरसीत्यवस्थायाम् सत्वेन सभावस्य। "प्रातरग्निम्" ( शु० य० सं० ३४।३४ ) इत्यत्र 'प्रातः इति पदस्य अग्निमित्यनेन संहिताविवक्षायाम् " खरवसानयोर्विसर्जनीयः " ( पा० ८।३।१५ ) इति खरवसानयोरसत्वेन विसर्गाप्राप्तौ रभावस्य। इत्येवमादयोऽत्र प्रदेशाः॥

काचिदूष्मा। द्वित्वे जिह्वामूलीयो-पध्मानीयत्वयोः। प्रतिष्ठिता तत्स्वरूपङ्गता। बोध्येति शेषः। विसर्गाऽपेक्षया अनयोरुच्चारणे कालस्य द्वैगुण्यात् द्वित्वोपपत्तिः। एनयोर्माध्यन्दिने रूपाभावः। अत्र परिसंख्यानं तु पुष्पाहारस्य फलाहरणमिव अविरुद्धम्। लौकिके रूपे यथा—कᳲकरोति। कᳲपचति। इति॥

काचिदूष्मा। समानजातिका विवृत्तितां गता। बोध्येति शेषः। वक्ष्यति च आचार्य एव—" आकाशस्थे " ( या० शि० व० प्र० ८ ) ति विवृत्तेरुच्चारणप्रदर्शनेन काले विसर्गतुल्यताम्। नारदोऽपि— " चतसृणाम् " ( ना० शि० २।४।३ ) इति मात्रिकं विवृत्तीनामान्तरं कालमभिदधानो विसर्गतुल्यतां प्रतिपादयति। ननु विसर्गस्यार्धमात्रिकप्रसिद्ध्या मात्रिकायाः विवृत्तेः तुल्यत्वम् अनुपपन्नमिति चेत्, न। " अथ स्वैर्द्वैरित्यादौ हिकारसदृशो भवेत्। विसर्गः इति शेषः। " ( ल० मा० शि० २१ ) इति वचने माध्यन्दिनानां कृते विसर्गस्यापि मात्रिकत्वप्रतीतेः। "ह्रस्वाद्दीर्घाच्च परतो विसर्ग-

श्चेत्तदा बुधः। ह्रस्वस्वरानुकूल्येनोच्चारयेत्तं सदा, बुधैः" (म० शि० शि० २१। अत्र "बुधैः" इत्युत्तरत्रान्वयि) इत्युक्तेश्च। सा च या० शि० व० प्र० ६ म्यां कारिकायां वक्ष्यमाणा ज्ञेया। तत्राऽणुमात्रादिकालविलम्बेनोच्चार्य्यत्वेन समानजातीयता। "यऽईशे" (शु० य० सं० २२।२) इत्यादि तत्प्रदेशेषु विसर्गोच्चारणवत्कालविलम्बः करणीय इत्यर्थः।

काचिदूष्मा। ऊष्माणम् अन्तर्वायुं प्रददाति वहिर्विमुच्य प्रकटयति इत्यूष्मप्रदायिनी। इत्थमन्वर्थत्वात् विसर्गस्य स्वरूपमेव पर्य्यवसितं भवति। विसर्गस्वरूपा इति यावत्। यथा—"आशुः शिशानो" (शु० य० सं० १७।३३) इत्यादयो विसर्गप्रदेशाः॥ ७३॥

तत्र स्वरूपावस्थितताया ऊष्मणः (विसर्गस्य) उच्चारणप्रकारेण उष्मप्रदायित्व माह—

**यथा बालस्य[१] सर्पस्य निःश्वासो लघुचेतसः॥**
**एवमूष्मा प्रयोक्तव्या[२] हकारपरिवर्जिता॥ ७४॥**

यथा बालस्येति।—लघुचेतसः अल्पसत्वस्य। बालस्य अप्राप्ततारुण्यस्य। सर्पस्य भुजङ्गस्य। निःश्वासो वहिर्निर्गतमुखपवनश्रुतिः। यथा येन प्रकारेण। श्रूयते इतिशेषः। एवम् अमुना प्रकारेण। ऊष्मा विसर्गः। प्रयोक्तव्या उच्चारणीया। ननु तस्य निःश्वासो हकारत्वेनेव भासते तत् किम्? ऊष्मण उच्चारणं हकारत्वेन करणीयमित्यत आह—हकारेति।—हकारेण हकारत्वेन परिवर्जिता रहिता। प्रयोक्तव्येत्यनुवर्त्तते। हकारत्वेन सा न मन्तव्या किन्तु तत्सदृशी ऊष्मश्रुति र्यथाभवेत्तथा श्रावणीयेत्यर्थः। तथाहि—

देवो वः सविता (शु. य. सं. १।१) चात्र हकारसदृशो भवेत्।
देवीः। तिस्रो (शु. य. प. २१।५०) विसर्गस्तु हिकारसदृशो भवेत्।
आखुस्ते पशुः (शु. य. सं. ३।५७) इत्यादौ हुकारसदृशो भवेत्।

---

१ भुजङ्गस्य उच्छ्वासो गत च०।
२ व्यो हकारं परिवर्जयेत् ग०। पद्यमेतत् ७० त्या अनन्तरं पठितम् नात्र ग, च०।

विसर्गश्चाग्ने ( शु. य. सं. ७।४२) रित्यादौ हेकारसदृशो भवेत्।

विसर्गो "बाह्वो (शु. य. प. १६।५३) रित्यादौ होकारसदृशो भवेत्।

अथ "स्वैः। दद्यौ (शु. य. प. १४।३) रित्यादौ हिकार स० ॥

विसर्गो "द्यौः। पिते (शु. य. प. २।११) त्यादौ हुकारसदृशो भवेत्।

हकारो नैव मन्तव्य इति शास्त्रव्यवस्थितिः ॥
फणिनिश्श्वाससदृशो विसर्गो भवति ध्रुवम् ।
( ल० मा० शि० १८—२२ ) इति ।

इति शास्त्रव्यवस्थितिरित्यस्यायम्भावः । "अयोगवाहा विज्ञेया आश्रयस्थानभागिनः" ( पा० शि० २२ ) इत्ययोगवाहानामाश्रयभागित्वेन यस्य स्वरस्याग्र विसर्गो भवति तच्छ्रुतिगर्भितहकार त्वेनेव श्रूयते इति नियमः इति। नचैवम् ऐकारादौकाराच्च परीभूतस्य विसर्गस्य हि-हुकारसदृशे श्रुती अनुपपन्ने इति चेत् । न। तयोरन्ते इकारोकारयोरेव श्रवणात् तत्परीभूतत्वेन विसर्गस्य हि-हुकारयोः सदृश्याः श्रुतेरबाधात् च ॥ अत्र हकारादिसादृश्यकथनेन 'हकारो नैव मन्तव्य इति हकारस्य साक्षात्प्रतिषेधनेन च विसर्गाऽव्यवहितस्वरोच्चारणप्रयत्ने एव किंचिदाधिक्येनोष्मा प्रयोक्तव्या नतु तत्र प्रयत्नान्तरमपेक्षितमिति सूचितम् । तेन हिकाराद्यक्षरोच्चारणकालापेक्षयातत्सदृशोष्मणः उच्चारणे अर्धः कालः पर्यवसितः। प्रयत्नान्तरानपेक्षत्वात् । मूले 'लघुचेतसः, बालस्येति विशेषणद्वयेन महासत्वस्य तरुणसर्पस्य तारगम्भीर-हहह्र् इति हकारसदृश श्रुतेर्निषेधश्च सूचितः— ॥ ७४ ॥

समानजातिकामूष्माणमाह—

**विवृत्तिप्रत्ययामूष्मां[१] प्रवदन्ति मनीषिणः ।**
**तामेव प्रतिषेधन्ति आ-ई-ऊँ[२]-ए निदर्शनम् ॥७५॥**

मनीषिणः विद्वांसः । ऊष्माम् विसर्गसमानजातिकाम् । विवृत्या प्रतीयते इति विवृत्तिप्रत्यया ताम् । प्रवदन्ति माध्यमिकान्तरालरूपेणोच्चरन्ति । कुत्र ? इत्याकाङ्क्षायाम् आह—आई इति ।

---

१ दू ग० किञ्चैषा ७३ त्यन्तरं दृश्यते। २ उ ए घ० । ऊ ऋ च० ।

आ-ई-ऊ-ए निदर्शनम् । एतत्स्वरमात्रोपलक्षकम् । तेन ह्रस्वे स्वरे परे वक्ष्यमाणायाः वत्सानुसारिण्याः विवृत्तेः " वत्सानुसारिणी चादौ दीर्घा 'ताऽअस्य' ( शु. य. सं. १२।५५ ) दर्शनम् " ( या. शि. व. प्र. १२ ) इति निदर्शनं संगच्छते । यथा च " गोजाऽऋतजा " ( शु. य. सं. १०।२४ ) इत्येवमादयः । अत्र । ताम् एव । समानजातीयत्वेन प्राप्तां हकारसदृशोच्चार्यमाणताम् एव । प्रतिषेधन्ति निवारयन्ति । विवृत्तिं हकारसदृशामुच्चारयितुं नैव स्वीकुर्वन्ति किन्तु माध्यमिकान्तरालरूपेणैव मन्वते इत्यर्थः । प्रकृतोदाहरणानि यथा— " षऽआत्मदा " ( शु. य. सं. २५।१३ ) । " षऽईशे " ( शु. य. सं. २३।३ ) । " कयात्त्वन्नऽऊत्या " ( शु. य. सं. ३६।७ ) । पुरुषऽएवे " ( शु. य. सं. ३१।२ ) । इति ॥ स्वरमात्रे यथा—" आनऽइन्द्रो " ( शु. य. सं. २०।४८ ) । " इमाऽउत्वा " ( शु. य. सं. ३३।८१ । " षऽओजसा " ( शु. य. सं. ७।४० ) इत्यादीनि ज्ञेयानि ।

इति श्री योगिवरयाज्ञवल्क्यमहर्षिप्रोक्तायां शिक्षायां स्वरप्रकरणे
दीक्षितामरनाथशास्त्रिकृतायां शिक्षावल्ल्याख्यायां
विवृतौ हस्तचालनविध्यधिकारः ॥ ३ ॥

---

१ अत्राथ मङ्गशर्मा प्राह—

आदौ हस्तं न्यसेन्मध्ये स्थितिरेषा सनातनी ।
ततः स्वरानुकूल्येन गतिस्तस्य न संशयः ॥

इति मूलस्थानम् ।

अधस्तात्प्रव्रजन्पूर्वमूर्ध्वान्मध्ये च तिष्ठति ।
मध्यतो दक्षिणं गच्छेद्दक्षिणाद्याति चोत्तरे ॥
दृष्ट्वा जात्यस्वरं शीघ्रं मध्यतो याति चोत्तरम् ।
उत्तराद्यात्यधोहस्तं स्वरं दृष्ट्वा च दक्षिणे ॥
अर्धन्युब्जे ततः पाणिरधस्तात् याति चोत्तरे ।
सम्पूर्णे सत्यधो गच्छेदधस्ताच्च न संशयः ॥
सिꣳह्यसि प्रतीकं च ह्यवसाने विना करम् ।
मध्यतो याति सर्वत्र व्यूर्ध्वमेव सुनिश्चितम् ॥
अनुदात्तसमूहो यान् वर्णानाश्रित्य तिष्ठति ।

ते युक्तास्तं परित्यक्तुमशक्ता निजबन्धुवत् ॥
स्वरितेप्येवमेव स्याद्दक्षिणांसे विशेषतः ।
न च पूर्वोक्तनियमो विद्यतेऽत्रेति निश्चितम् ॥
प्रतीकेऽपि विशेषोक्तिर्म्मन्यते वानुवर्त्तिनम् ।

इति सामान्यविधिः ।

एकारेण समा रेखा मूर्द्धिन वर्णस्य या स्थिता ।
वामगां तां विजानीयादूर्ध्वगां ह्यूर्ध्वसंस्थिताम् ॥
तिर्यग्रेखा च वर्णस्य पादपार्श्वे स्थिता तु या ।
ऊर्ध्वरेखासहायेन तस्यास्तु स्यादधोगतिः ॥
वामरेखासहायेन गतिस्तस्यास्तु दक्षिणे ।
बिन्दोर्गतिश्च जात्यस्य मध्येस्यादिति निश्चितम् ॥
अर्धन्युब्जस्य पूर्णस्य दक्षिणः स्यात्त्रधो गतिः
(म. श. शि. ७-१८) इति चतुस्स्वर गतिः ।

## अथाङ्गुलि क्रियाः ।

ह्रस्वे स्वरितसंयुक्ते वर्णे च सविसर्गके ।
कनिष्ठा तर्जनी चैव निष्कास्या हि स्वयूथतः ॥
दीर्घे स्वरितसंप्राप्ते ह्येकामेव कनिष्ठिकाम् ।
जात्ये युग्मं विशेषेण त्यक्तव्यमिति निश्चितम् ॥
(इदं सवकाराभिप्रायेणोक्तम्) स्वरितेभ्यः क्रमेणैव दक्षिणोत्तरगामिनी ।
कनिष्ठा तर्जनी चैव त्याज्या तूर्ध्वे तु देशिनी ।
अनुदात्तयुते, ह्रस्वे सस्वराच्च परेऽपि वै ।
सुज्ञैः कनिष्ठिका त्याज्या सविसर्गे द्विजोत्तमैः ॥

दीर्घे (अनुस्वारेऽ०कारे इत्यर्थः) तु देशिनी त्याज्या क्षिप्रं (वक्ष्यमाणलक्षणम्) स्याद् द्विलके (गुरौ इत्यर्थः), तथा लघौ ।

मन्त्रे त्रिधा विधिर्ज्ञेयो ब्राह्मणे तु द्विधा स्मृतः ।

अथ क्षिप्रलक्षणम् — तर्जन्याः पृष्ठसंश्लिष्टमङ्गुष्ठं चाग्रनामितम् ।
तं वै क्षिप्रं विजानीयात् स्वरविद्भिरुदीरितम् ।
तर्जन्यङ्गुष्ठयोर्योगो नखयोगश्च यस्तयोः ॥
अङ्गुष्ठमध्ये यस्तस्या योगो भवति निश्चितम् ।
अत्रैवोक्तः क्रमेणैव नैतदेकेऽवसानगे ॥
विस्वरे च मकारान्ते मुष्ठिका च तथैव च ।

## अथ स्वरसंहिताविधिः ।

तत्र अङ्गुलिक्षेपे ऊष्मसम्बद्धजात्यस्य यतो वैशिष्ट्यम् उक्तम् अतो जात्याद्यष्टस्वरितभेदानेव तावदाह—

**अष्टौ स्वरान्प्रवक्ष्यामि तेषामेव तु लक्षणम् ।**
**जात्योऽभिनिहितः क्षैप्रः प्राश्लिष्टश्च तथाऽपरः ॥७६॥**

---

अथ विचित्रगतिः— कोदादिति प्रतीके च कोसौ च त्र्यम्बकेऽपि च ।
एषूदात्तं विजानीयात्तदन्यत्र च मध्यगम् ।
स्वरितस्य विशेषेण स्थानं मध्ये ह्युदीरितम् ॥
मध्यतश्च वहिर्गन्तुमशक्यत्वमिति स्थितिः ।
वर्णाश्च ये न तिष्ठन्ति संज्ञा तेषां तु तस्य वै ॥
स्वरितस्य विशेषेण ज्ञेया स्वरविशारदैः ।
त्रयाणां च स्वराणां च त्रिधा संज्ञा विशेषतः ॥
खल्वेकस्य त्रिधा संज्ञा मध्यस्थस्वरितस्य च ।
तत्समः स्वरजात्यश्च ह्यर्धन्युब्जो न तत्समः ॥
सोऽपि पूर्णोऽनुदात्तेन समश्चेति विधिक्रमः ।
( म० श० शि० २२ २५, २७, २८, ३२–३८ ) इति ॥

### अथ ब्राह्मणस्वरसंक्षेपः ।

वामस्था चोपरिष्ठा या मन्त्रे वर्णस्य संस्थितिः ।
ब्राह्मणे सा तु मध्यस्था ज्ञेया मध्यस्थितापि या ॥
यदुत्तरमधो याति मन्त्रे याति च दक्षिणे ।
तदेव ब्राह्मणाख्ये तु विपरीतगतिर्भवेत् ॥
जात्यं मध्ये स्थितं नित्यमूर्ध्वे न्युब्जं समाश्रितम् ।
इति संक्षेपनियमो ब्राह्मणेष्वेव निश्चितः । ( म० श० शि० ४०–४२ ) इति ॥

तथा हि "ब्राह्मणे तूदात्ता-नुदात्तौ । भाषिकस्वारौ" ( का० प० प्र० सू० १।८ ) इति" कात्यायनः ॥

### कल्पादिसूत्रेषु विशेषः

" तानस्वराणि च्छन्दोवत् सूत्राणि" ( का० प० प्र० सू० १।७ ) इति स एवाह । तानः एकश्रुतिः ॥

१ च च, ज० ।

तैरोऽव्यञ्जनसंज्ञश्च तथा तैरोविरामकः ।
पादवृत्तो भवेत्तद्वत् ताथाभाव्य इति स्वराः ॥७७॥

अष्टाविति । अहं याज्ञवल्क्यः इत्याक्षिप्यते । अष्टौ अष्ट-विधान् । स्वरान् स्वरितान् । प्रवक्ष्यामि जात्यादिरूपेण वर्णयामि । तु पुनः । तेषाम् जात्याद्यष्टविधस्वराणाम् । एव हि । लक्षणम् स्वरूपं च वर्णयामि । तथा हि—जात्यः (१) । अभिनिहितः (२) । क्षैप्रः (३) । तथाचाऽपरः चतुर्थोऽन्यः । प्रश्लिष्टः (४) । च पुनः । तैरोऽव्यञ्जनसंज्ञः (५) । तैरोविरामकः (६) । तद्वत् तथा । पादवृत्तः (७) । भवेत् भवति । तथा च । ताथाभाव्यः (८) । इति अष्टौ । स्वराः स्वरितभेदाः ज्ञातव्या इति शेषः ॥ ७६ ॥ ७७ ॥

अथैतेषां लक्षणान्येव सोदाहरणानि क्रमेण दर्शयति—

एकपदे नीचपूर्वः सयवो जात्य इष्यते ।
अपूर्वोऽपि परस्तद्वत् " धान्यं-सुप्त्वा-
स्वं रित्यपि ॥ ७८ ॥

एकपद इति । —एकपदे समानपदे । नीचःपूर्वो यस्मात् सः । अनुदात्तात्पर इत्यर्थः । सयवः यकार-वकारान्यतरयुतः । स्वरित इत्याक्षिप्यते । जात्यः एतन्नामा । इष्यते । आचार्यैरिति शेषः । तद्वत् तथैव । यकार-वकारान्यतरसहिते एकपदे इत्यर्थः । अपूर्वः नास्ति पूर्वोयस्मात्सः । अपि । अविद्यमानपूर्वः स्वरित इत्यर्थः ।

---

१ स्तथापरे ग, ङातिरिक्त० ।

२ न्यङ्क्न्या ङातिरिक्त० । ३ अस्याग्रे—'एकपद इत्याह । नीचपूर्वः अपूर्वोऽपि सयकारः सवकारो वा जात्यः स्वरो भवति यथा । मनुष्यानिति । सुप्त्वेति । चम्वीवेति । धान्यम् । कन्याऽइव । स्वैः । क्वोऽर्ष्ठम् । एव०ह्याह यानि चान्यानीदृग्लक्षणानि पदानि भवन्तीति ।' इत्यधिकः पाठो व्याख्यारूपो ग-ङा-तिरिक्तेपु दृश्यते । एवमुत्तरत्रापि ।

परः अन्यो जात्य इष्यते । यथा—" धान्यमसि " (शु. य. सं. १।२०) इति नीचपूर्वः सयकारस्वरितः । " सुप्प्वा कामंधुक्षः " (शु. य. सं. १।२) इति सवकारो नीचपूर्वः स्वरितः । अपूर्वो यथा—" स्वंर्द्देवेषु " ( शु. य. सं. १८।६४ ) इति ॥ ७८ ॥

**ए ओ-आभ्यामुदात्ताभ्या-मकारोनिहतश्च यः ।**
**स च यत्र प्रलुप्येत तं चाभिनिहितं विदुः ॥ ७९ ॥**

उदात्ताभ्याम् । ए-ओ-आभ्याम् । उदात्तत्वगुणविशिष्टाभ्यामेकारौकाराभ्याम्पर इत्यर्थः । यः । निहतः अनुदात्तत्वविशिष्टः । अकारः । भवेदिति शेषः । स च तादृशः अकारः । यत्र एकारौकारान्यतरस्मिन् । प्रलुप्येत पूर्वरूपवद्भावेन विलीयेत । तं च एकारौकारान्यतरमेव । अभिनिहितम् द्वितीयं स्वरितभेदम् । विदुः मन्यते । आचार्या इति शेषः । एकारे यथा—" ते + अप्सरसाम् = तेऽप्सरसाम्" ( शु० य० सं० २४।३७ ) इत्यत्र । ओकारे यथा—"व्वेदः + असि = व्वेदोसि" ( शु० य० सं० २।२१ ) इत्यत्र सोपधविसर्गस्य 'अकारे च' ( शु० य० प्रा० ४।४३ ) इति ओत्वे च । 'एदोद्भ्यामकारः' ( शु० य० प्रा० ४।६१ ) इति पूर्वरूपेऽभिनिहितत्वम् ॥ ७९ ॥

**इ-उँवर्णौ यदोदात्ता-वापद्येते यवौ क्वचित् ।**
**अनुदात्ते परे नित्यं विद्यात् क्षैप्रस्य लक्षणम् ॥८०॥**

---

१ रिक्ति घ, ञतिरिक्त० । २ अकारो लुप्यते यत्र ग, च० । अकारो यत्र लुप्येत इति घ० । ३ यथा—कुक्कुटः असि कुक्कुटोसि । श्वात्रः असि श्वात्रोसि । ते अप्सरसाम् तेप्सरसाम् । ते अवन्तु तेवन्तु । व्वेदः असि व्वेदोसि । मारुतः असि मारुतोसि । कः असि कोसि । भागः असि भागोसि । सः अहम् सोहम् । (अत्रोदात्ते स्वरितोऽनुदात्तः ) एव०( )व्याह० । घ, ञतिरिक्त० ॥

४ यूवर्णौ च ज० । ५ तव च, ज० । ६ यथा—त्रि अम्बकम् त्र्यम्बकम् । द्रु अन्नः द्रून्नः । व्वीडु अङ्गः व्वीड्वङ्गः । व्वाजी अर्व्वन् व्वाज्ज्यर्व्वन् । एव०( )०घ, ञा० ।

उदात्तौ उदात्तत्वविशिष्टौ । इ-उवर्णौ इवर्ण उवर्णश्च । यदा । क्वचित् । अनुदात्ते अनुदात्तत्वविशिष्टेऽसवर्णे स्वरे परे । यवौ क्रमात् यकारं वकारं च । आपद्येते प्राप्नुतः । तदा नित्यम् नियमेन । क्षैप्रस्य तृतीयस्य स्वरितभेदस्य । लक्षणम् स्वरूपम् । विद्यात् जानीयात् । इवर्णस्य यथा—"त्रि + अम्बकम् = त्र्यम्बकम्" (शु० य० सं० ३।६०) इति । उवर्णस्य यथा-"द्रु + अन्नः + = द्रून्नः" (शु० य० सं० ११।७०) इति ।

इकारो यत्र दृश्येत इकारेणैवं संयुतः ।
उदात्तश्चानुदात्तेन प्रश्लिष्टो भवति स्वरः ॥८१॥

उदात्तः उदात्तत्वविशिष्टः । इकारः इवर्णः । अनुदात्तेन अनुदात्तत्वविशिष्टेन । इकारेण इवर्णेन । एव नियतम् । च यदि । संयुतः दीर्घीभावेन सहितः । यत्र । दृश्येत । तदा । स्वरः । संधिना जातः स्वरितः स्वरः । प्रश्लिष्टः तुर्यः स्वरितभेदकः । भवति जायते । यथा –अभि + इन्धताम्, इत्यत्र सवर्णदीर्घीभूतः "सिठं० सवर्णे दीर्घम्" (शु. य. प्रा. ४।५१) इति जायमानः ईकारः 'उदात्त वानुदात्तः (शु. य. प्रा. ४।१३२) इत्यपोद्य "इवर्णमुभयतो ह्रस्वमुदात्तपूर्वमनुदात्तपरꣳस्वरितम्" (शु. य. प्रा. ४।१३३) इति स्वरितः सन् "इवर्ण उभयतो ह्रस्वः प्रश्लिष्टः" (शु. य. प्रा. १।११६) इति प्रश्लिष्टसंज्ञको भवति ॥ ८१ ॥

उदात्तपूर्वः स्वरितो व्यञ्जनेन युतो यदि ।
एष सर्वो बहुस्वारस् तैरोव्यञ्जन उच्यते ॥८२॥

---

१ दृश्यते यत्र ग, च, ज० । २ ण च ग, च, ज० । ३ यथा—अभि इन्धताम् अभीन्धताम् । अभि इमम् अभीमम् । वि इहिव्वी'हि । सुचि इव सुचीव । एव० घ० ज्ञाति० । ४ उदात्तपूर्वं यत्किंचिच्छन्दसि स्वरितं भवेत् घ, छ० । उदा०र्वो यत्किञ्चिद्व्यञ्जनेन युतः स्वरः ग, च, ज० । ५ सर्वं ब घ० । सर्वे ब ग, च, ज० । ६ यथा—इडे' । रन्ते' । हव्ये' । काम्ये' । चन्द्रे' । ज्योते' । अदि'ति । सर'स्वति । महि' । त्रिश्रु'ति एवꣳ ज्ञा० घ, ज्ञाति० ।

यदि। व्यञ्जनेन स्पर्शादिवर्णेन। युतः संयुक्तः । स्वरितः स्वरितत्वविशिष्टोऽत्तरः। उदात्तः पूर्वो यस्मात् स उदात्तपूर्वः। उदात्तात्परो भवेत् इत्यर्थः। तथाहि—"उदात्तादयः परे (अभिनिहितप्रभृतयः) सप्त" (शु. य. प्रा. १।११२) इति। बहवः। अनेके स्वराः स्वरिताः यस्मिन् पदसमूहे सः। एषः बहुस्वारः बहुस्वरितविशिष्टः। सर्वः पदसमूहः। तैरो व्यञ्जनः। तिरो नीचत्वेनान्तर्हितो व्यज्यते इति तिरोव्यञ्जनः। स एव तैरोव्यञ्जनः। उच्यते। स्वरितान्तोदात्तादिशब्दसमूहे स्वरितानां निघातेनान्तर्धानात् तैरोव्यञ्जनता। यथा—इडे + रन्ते + हव्ये + काम्ये + चन्द्रे + ज्योते + अदिति + सरस्वति + महि + विश्रुति = इडेरन्तेहव्ये काम्येचन्द्रेज्ज्योतेदितिसरस्वतिमहिविश्रुति।" (शु० य० सं० ८।४३) इति। ज्योते + अदिति, इत्यादिषु तु पूर्वरूपैकादेशे 'स्वरितवान् स्वरितः' (शु० य० प्रा० ४।१३१) इति प्राप्ते, परत्वात् 'उदात्तवानुदात्तः' (शु० य० प्रा० ४।१३२) स्वरितस्य तकारोत्तर वर्त्तिनः एकारस्यो दात्तत्वे निघाताभावः। दकारोत्तरवर्त्तिनः स्वरितेकारस्य च उदात्तस्वरित परत्वाभावात् 'निहितमुदात्तं स्वरितपरम्।' (शु० य० प्रा० ४।१३६) इति न निघातः। एवमन्यत्राप्यूह्यम्॥ ८२॥

अवग्रहात् परो यस्तु स्वरितः स्यादनन्तरः[1]।
तैरोविरामं तंविद्या-दुदात्तो यद्यवग्रहः[2]॥ ८३॥

यः। तु च। स्वरितः। अवग्रहात् पञ्चविध-कृत्तद्धितादि-वृत्तिप्रदर्शनाय कृतात् विच्छेदात्। अनन्तरः व्यवधानरहितः। परः। यः। तु च। स्वरितः। स्यात् दृश्येत। स च, अवग्रहः

१ उदात्तावग्रहाद्यस्तु स्वरितः स्यादनन्तरः। तै...द्यात्तैरोव्यञ्जनमन्यथा। ग, च, ज०॥ २ रम् घ, छ०॥ ३ यथा--गोमदिति गो। मत् ॥ गोपतावविति गो। पतौ ॥ प्रप्रेतिप्र। प्रं ॥ तातेति ता ता ॥ त्रितेति त्रि। तता ॥ समिद्धइति सम्। इद्धः॥ एव० ग, च, ज०॥

छिन्नस्य वृत्तिपूर्वखण्डस्य विरामात्मकः । यदि चेत् । उदात्तः उदात्तत्वविशिष्टः । भवेत् । तदा । तम् उदात्तावग्रहात्परं स्वरितम् । तिरः तिर्यग् विरस्यते उदात्तः अनेन इति तिरोविरामः, स एव तैरोविरामः, तम् षष्ठं भेदम् । विद्यात् जानीयात् । यथा—"गोपताविति गो । पतौ" ( शु० य० प० १।१ इत्यत्र द्वितीयावृत्तौ यो गकारोत्तरः ओकारः उदात्तावग्रहः, तस्मात्परो यः पकारोत्तरवर्ती स्वरितोऽकारः स तैरोविरामसंज्ञकः । पार्श्वे उदात्तावग्रहात्मकविरामस्य सत्वात् । तथा च प्रातिशाख्यम्—"समासेऽवग्रहो ह्रस्वसमकालः" ( शु० य० प्रा० ५।१ ) अनेन 'गोपताविति समस्तपदस्य प्राप्तेऽवग्रहे ( पदच्छेदे ) "क्रमोक्तावृत्तिः पदेषु" ( शु० य० प्रा० ४।२१ ) इत्यतिदेशेन "पूर्वस्योत्तरसंहितस्य स्थितोपस्थितमवगृह्यस्य" ( शु० य० प्रा० ४।१८८ ) इति अवगृह्यपदस्यावृत्तौ विहितायाम् "प्रगृह्यं चर्चायामितिना पदेषु" ( शु० य० प्रा० ४।१८ ) इत्यधिकृत्य "पदावृत्तौ चान्तरेण" ( शु० य० प्रा० ४।२० ) इत्यनेन 'इति'—शब्दागमे कृते 'गोपताविति गो । पतौ' इति गोपदोऽवगृहीतः । स च ह्रस्वसमकाल इति तत्प्रदर्शनायैव ततः परे सरला ( । ) रेखा दीयते । न च एष प्रातिशाख्योक्तो मात्राकालः "अवग्रहे ( या० शि० स्व० प्र० १३ ) त्वित्यादिना विरुध्यते इति शङ्क्यम् । तत्रैव मात्राप्रकरणेऽस्य प्राकृत-परिभाषिकरूपेण ऐक्यत्वप्रतिपादनात् । अत एव अवग्रहे विवृत्तितुल्यां श्रुतिं श्रावयन्ति पदकाः । एवमन्यत्राप्यूह्यम् ॥ ८३ ॥

---

१ स्थितोपस्थितलक्षणम् यथा—"उपस्थितं सेतिकारं, केवलं तु पदं स्थितम् । तत स्थितोपस्थितं नाम यत्रोभे आह संहिते" इति । अस्यार्थः—इतिकारसहितं पदम् उपस्थितसंज्ञकं भवति । केवलम् इतिकारं विना । तु । यत्पदं तत् स्थितसंज्ञकं भवति । यत्र उभे सेतिकारं पदं केवलं पदं च संहिते मिलिते आह तत् स्थितोपस्थितसंज्ञकं भवति । अस्यैव वेष्टनशब्देन व्यवहारः वैदिकेषु । इति ॥ २ चर्चा-शब्देन इतिकरणात् परतो या तस्यैव पदस्य द्विरुक्तिः सोच्यते । इति शु० य० प्रा० ४।१८ सूत्रे भाष्यकाराः । ३ अवग्रहप्रदेशाः, कृदादिवृत्तयः । शु० य० प्रा० ५माध्यायोक्ताः । वेष्टकप्रदेशास्तु अवगृह्यम्, पददीर्घीभावः, एकपदेषत्वभावोविनामाख्यः, प्रगृह्यम्, रिफितोनिरुक्तः, कण्डिकावसानम् इति, ( शु० य० प्रा० ४।१८८-१६४ ) प्रातिशाख्योक्ताः ज्ञेयाः ॥

स्वरे च स्वरिते चैव विवृत्तिर्यत्र दृश्यते ॥
पादवृत्तो भवेत् स्वारः "श्वित्रऽआदित्य" दर्शनम्[2] ८४

च पुनः । यत्र । स्वरिते स्वरितत्वविशिष्टे । स्वरे अकारादौ स्वरवर्णे । परे सति इति शेषः । विवृत्तिः स्वरयोर्मध्ये सन्ध्यभावलक्षणा । दृश्यते भवति । तदा । स्वारः स्वरितत्वविशिष्टोऽक्षरः । पदस्यायं विरामो विवृत्तिलक्षणः, पादः तेन, सह वृत्यते विभज्यते । संहिता इति शेषः । इति पादवृत्तः तदाख्यः सप्तमभेदः । भवेत् भवति । यथा च नारदः—"स्वरे चेत् स्वरितं यत्र विवृता यत्र संहिता । एतत्पादान्तवृत्तस्य लक्षणं० शास्त्रचोदितम् " ( ना० शि० २।१।७ ) इति । निदर्शनमाह—श्वित्र इति । " श्वित्रऽआदित्यानाम् " ( शु० य० सं० २४।३६ ) इत्याद्युदाहरणम् ज्ञेयम् ८४

उदात्ताक्षरयोर्मध्ये भवेन्नीचस्त्ववग्रहः ॥
ताथाभाव्यो भवेत्स्वारस्[3] "तनू-नप्त्रे" निदर्शनम्[4] ॥८५॥

द्वयोरुदात्ताक्षरयोः । मध्ये । तु यदि । नीचः अनुदात्तत्वविशिष्टाक्षरः । अवग्रहः वृत्तिच्छेदलक्षणो विरामः । भवेत् स्यात् । तदा । स्वारः स्वरितः । तथाभाव एव ताथाभाव्यम् , तदस्यास्तीति ताथाभाव्यः एतन्नामाऽष्टमो भेदः । भवेत् भवति । यतः "उदात्ताच्चानुदात्तंस्वरितमिति ।" निहितमुदात्तस्वरितम् " ( शु० य० प्रा० ४।१३५, १३६ ) इति तु " अनवग्रहे " ( शु० य० प्रा० ४।१३७ ) इत्युत्तरेण सूत्रेण पर्युदस्तम् । निदर्शनमाह—" तनू-नप्त्रे " इति ।

---

१ स्वरयोरन्तरे काले विवृत्तिर्दृश्यते यदि । सः स्वारः पादवृत्तः स्यात् ' कऽईमिति निदर्शनम् ' ग, च, ज० ॥

२ यथा—श्वित्रऽआदित्यानाम् । काऽईम् । पुत्रऽईधे । एवंछ्या० घ-ङाति० ॥

३ स्कम्प घ० ॥ ४ यथा—तनूनप्त्रऽइतितनू । नप्त्रे ॥ तनूनपादिति तनू । न पाव ॥ तनूनपातमिति तनू । न पातम् ॥ एवंछ्या० न्तीति । इत्यष्टपद समाम्नाये वैशेषिके याज्ञवल्क्यवचनानां पदानां पाठः समाप्तः घ-ङातिरि० ॥

माध्यन्दिनानां तु "तनूनप्त्रऽइतितनू । नप्त्रे" (शु० य० प० ५।५) इत्यत्र द्विरावृत्तस्य तनूशब्दस्थस्य अवगृहीतस्य "नू"—कारस्य उदात्तात्परत्वेन प्राप्तं स्वरितमपोह्य उदात्तेपरे निहितमेव । तदुक्तम् तन्मतानुसारिभिः औज्जिहायनकैः "अवग्रहो यदा नीच उच्चयोर्मध्यतः क्वचित् । ताथाभाव्यो भवेत्कम्पस् "तनू-नप्त्रे'" निदर्शनम्" इति । अत्र स्वरप्रदर्शनम् माध्यन्दिनानुसारि । परमते तु तनूशब्दः स्वरितान्त एव स्पष्टञ्चैतत् "उदाद्यन्त इत्यादि शु० य० प्रा० १।१२० सूत्रभाष्ये । विस्तरस्तु तत्रैव द्रष्टव्यः ॥ येषां च स्वरितः ताथाभाव्यो विहितः तेषामन्यशाखिनां मतेऽपि निहितत्वाऽप्रापणात् स्वरितत्वभावेनैवस्थिते ताथाभाव्यमविरुद्धमेवेत्यूह्यम् ॥ ८५ ॥'

ननु "तनू नप्त्रे'" इत्यादि निदर्शने माध्यन्दिनानां उदात्तानुदात्तौ तु पृथग्भूतौ उपलभ्येते स्वरितश्च तयोरेकीभावे सति भवति तस्मिंश्च तिर्यग्गमनं गात्राणां भवति नच तदिह किञ्चिदुपलभ्यते अतो माध्यन्दिनविरुद्धत्वात् तेषांमते स्वरितो न ताथाभाव्य इत्याह—

**[2]माध्यन्दिनविरोधी स्यात् ताथाभाव्यस्तु यः स्वरः ॥**
**स्वरौ [3]चैवात्र दृश्येते भिन्नोदात्तानुदात्तकौ ॥ ८६ ॥**

माध्यन्दिनविरोधीति । तु यदि । ताथाभाव्यसंज्ञकः । यः स्वरितानांमध्ये पठितः । स्वरः स्वरितः । स्यात् तर्हि । माध्यन्दिनविरोधी माध्यन्दिनशाखासमधीतोदाहरणविरुद्धः । स्यात् भवेत् । यतः ।

---

१ इति याज्ञवल्क्यशिक्षायां स्वरप्रकरणं समाप्तम् ॥ घ० -

२ श्री गणेशाय नमः इति पूर्वं लिखित्वा पश्चात् 'माध्यन्दिनेति पद्यं प्रथमाङ्केनाङ्कितं दृश्यते घ० तेन तन्मतेऽत्र आरभ्यैव वर्णप्रकरणात्मकमुत्तरार्धं प्रारभ्यते । अस्य पद्यस्य वर्णप्रकरणारम्भकत्वेन पाठो न युक्तः । व० र० प्र० शि० कारेणापि स्वरप्रकरणे एवेदं पद्यं स्वरविषयकत्वादस्येति दिक् । अत एवास्माभिः ङातिरिक्त पुस्तकेष्वत्राऽपठितानामपि पद्यानां एतत्प्रकरणोचितानाम् इहैवाग्रे व्याख्या योजिता । तदेतत्सुधीभिश्चिन्तनीयम् ॥

३ नै ङातिरि० । स्वरौनैवात्र दृश्येत घ० ॥ नकारघटितपाठस्वीकारे भिन्नेत्यस्य मिलितरूपोऽर्थो योज्यः । "भिन्नं संगतमिति मेदिनीकोशात् ॥

अत्र माध्यन्दिन शाखासमधीतप्रकृतोदाहरणस्थले "तनूनप्त्रऽइति तनू । नप्त्रे" ( शु० य० प० ५।५ ) इत्यादौ च । भिन्नौ पृथक्स्थितौ उदात्तोऽनुदात्तश्च यत्र तौ भिन्नोदात्तानुदात्तकौ । एव । स्वरौ । दृश्येते उपलभ्येते । अतो नायं स्वरितः माध्यन्दिनानाम् । किन्तु कम्प एव । तथाहि—वर्णरत्न प्रदीपशिक्षायाममरेशः—"माध्यन्दिनविरोधी स्यात्ताथाभाव्यस्तु यः स्वरः । भिन्नौ यतोऽत्रदृश्येते तावुदात्ताऽनुदात्तकौ ॥ तस्मान्माध्यन्दिनीयानां पदे कम्पो विधीयते । तथोक्त मौञ्जिहायनकैर्माध्यन्दिनानुसारिभिः ॥ अवग्रहो यदा नीचः प्रोच्चयोर्मध्यतः क्वचित् । ताथाभाव्यो भवेत्कम्प-स्तनूनप्त्रे निदर्शनम् ॥ " ( व० र० प्र० शि० ६६—७१ ) इति ॥ ८६ ॥

[१]प्रसङ्गवशाद् व्यञ्जनव्यवधानेऽपि संहितायां स्वरितविधिं तदपवादं च प्रदर्शयति—

**उदात्तान्निहितः स्वारः स्वरितात्प्रचयो भवेत् ।**
**उदात्तात्स्वरितात्पूर्वो नान्यमांपद्यते स्वरम् ॥८७॥**

उदात्तान्निहित इति । उदात्तात् उदात्तत्वयुतादक्षरात् परः । तेन व्यञ्जनव्यवहितोऽपि । निहितः अनुदात्तः । स्वारः स्वरितः । भवेत् इति, अत्रापि आवृत्या योज्यम् । तथाहि—उव्वटाचार्यपादाः "प्रागुवर्णादक्षराणामेकीभावः शु० य० प्रा० ४।१३०-१३४ इत्यादिना स्वराणाम् अक्षराणामेकीभावस्य पूर्वोविधिः । इदानीमक्षराणां व्यञ्जनव्यवहितानां यः स्वरसंहितायां भवति स उच्यते "उदात्ताच्चानुदात्तꣳस्वरितम्" ( शु० य० प्रा० ४।१३५ ) इति । यथा— "स्वा + हा = स्वाहा" ( शु० य० सं० ४।५ ) । हि + स्म = हिष्म्मांते ( शु० य० सं० ३।४५ ) इति । इत्थं स्वरितस्थलं निरूप्य प्रचितं निरूपयति—**स्वरितात्प्रचय** इति । स्वरितात् स्वरितत्वविशिष्टादक्षरात् । परोऽनुदात्तोऽव्यञ्जनव्यवहितोऽपि । प्रचयः उदात्तमयः । भवेत् स्यात् । तथाहि—"स्वरितात्परमुदात्तमयम्" ( शु० य०

---

१ अत्र " ङ पुस्तकानुसारिपाठमादृत्याऽस्माभिर्व्याख्यायते ॥ २ आ ङातिरि० ॥ ३ ङातिरि० । एतत्पद्यचतुष्टयम् व० प्र० ११५। कारिकातः पूर्वं दृश्यते कादिपुस्तकेषु ।

प्रा० ४ । १३६ ) इति । यथा—"गणानाम् + त्वा = गणानान्त्वा" ( शु० य० सं० २३।१६ ) इति । अनयोरपवादस्थलं दर्शयति—उदात्तात्स्वरितादिति । यदि । अनुदात्तत्वविशिष्टोऽक्षरः व्यञ्जनव्यवहितोऽपि । उदात्तात् उच्चस्वरात् । स्वरितात् स्वरितस्वरात् । वा । पूर्वः आदिभूतः । तदा । अन्यम् स्वरितप्रचयान्यतरात्मकम् । स्वरम् स्वरत्वम् । न नहि । आपद्यते प्राप्नोति । किन्तु अनुदात्त एव भवति इत्यर्थः । तथाहि—"निहितमुदात्तस्वरितपरम्" ( शु० य० प्रा० ४।१३८ ) इति । स्वरितप्रतिषेधः उदात्ते परे यथा—"स्वाहा + सोमाय = स्वाहासोमाय" ( शु० य० सं० १०।५ ) इति । स्वरिते परे यथा—"भूर्भुवः + स्वः = भूर्भुवः स्वः" ( शु० य० सं० ३।३७ ) इति ॥ एवम्—"नोदात्तस्वरितोदयम्" ( शु० य० प्रा० ४।१४१ ) इति प्रचय प्रतिषेध उदात्ते परे यथा—"वाजे + वाजेवतःवाजिनोनः + धनेषु = वाजेवाजेवतःवाजिनोनो धनेषु" ( शु० य० सं० ६ १८ ) इत्यत्र द्वितीयनकारोत्तरवर्त्तिनः अनुदात्तस्य ओकारस्य । स्वरिते परे यथा—"रथौ + जाश्चसेनानीग्राम + ण्यौ = रथौजाश्चसेनानीग्रामण्यौ ( शु० य० सं १५।१५ ) इत्यत्र मकारोत्तरवर्त्तिनोऽनुदात्तस्याकारस्य । तेन ताथाभाव्यस्यमाध्यंदिनविरुद्धत्वं स्पष्टमेव ॥८७॥

अथ अविद्यमानपूर्वोऽपि स्वरितः स्वरिते परे निहितो भवतीत्याह—

**पदकाले यः स्वरितः संहितायां तथैव च ॥**
**स्वरितश्चेद् भवेत्पश्चात् सएव निहितः स्वरः ॥८८॥**

**पदकाल** इति । पदपाठ काले । यः स्वरितः स्वरः । संहितायाम् । च अपि । तथा उदात्तस्वरितपरत्वाभावे स्वरित इत्यर्थः । एवेत्यवधारणे । यथा—"स्वः + देवेषु ( शु० य० प० १८।५६ ) =

---

१ ताच्चे घ० ॥ २ चि घ० ॥

स्वर्द्देवेषु" (शु० य० क० १८।५६) इति। संहितायां क्वचिदपवादमाह—

स्वरितश्चेदिति। चेद् यदि। पश्चात् अनन्तरम्। स्वरितस्येतिशेषः अग्रे इत्यर्थः। स्वरितः द्वितीयस्वरितः। भवेत् आगच्छेत्। तर्हि। सः प्रथमः स्वरितः। एव। निहितः अनुदात्तत्वविशिष्टः। स्वरः। भवतीतिशेषः। अत्र स्वरितपरत्वमुदात्तपरत्वस्याप्युपलक्षणम्। तथाहि—निहितमुदात्तस्वरितपरम्" (शु० य० प्रा० ४।१३६) इति उदात्तपरत्वे निहितत्वं यथा—" स्वं÷+द्यौः=स्वर्द्यौः" (शु० य० क० ३।५) इति। स्वरितपरे यथा—" स्वं÷+स्वं÷=स्वः स्वः÷" (शु० य० प० १८।५६) इति पंचसंधिनाम्न्यां विकृतौ॥ ८८॥

अथ पूर्वश्लोकद्वयार्थं निष्कृष्य स्वरितप्रचययोः स्थलं वक्ति—

उदात्तान्निहितः स्वार्यः स्वारोदात्तौ न तत्परौ॥
स्वरोयश्चतथाभूतो ज्ञेयः स प्रचयः सदा॥ ८९॥

उदात्तादिति। उदात्तात्परः। निहितः। तस्मादनुदात्तात् परौ इति तत्परौ॥ स्वारोदात्तौ स्वरितश्च उदात्तश्च। न। यदि न भवेतां तदा इत्यर्थः। स्वार्यः स्वरितः कार्यः। यः। स्वरः अनुदात्तः। तथाभूतः स्वरितसमः। स्वरितात्संहितायामनुदात्तानाम् १।२।३८ इति पाणिनिविहितः शु० य० प्रा० ४।१३६ सूत्रविहितश्च स्वरः। सः। सदा। प्रचयः। ज्ञेयः। बोध्यः॥ ८९॥

प्रचये स्वरितसमत्वमुपपादयति—

उच्चानुदात्तयोर्योगे स्वरितः स्वरं उच्यते॥
ऐक्यं तत्प्रचयः प्रोक्तः सन्धिरेषं मिथोऽद्भुतः॥९०॥

उच्चेति। स्वरितः। स्वरः। उच्चानुदात्तयोः उदात्तत्वानुदात्तत्वयोः। योगे समाहारे। उच्यते। पाणिनीयादिभिः इतिशेषः। तथाहि—

---

१ ह ग, च०॥ २ स्वरितोयस्तथा ग, घ०। अस्मिन् पाठे-स्वरितः स्वरितसमः। नतु स्वरित इत्यर्थः कर्त्तव्यः॥ ३ स्वा ग, घ०॥ ४ पां अतिरि०॥

"समाहारः स्वरितः" ( पा० सू० १।२।३१ ) इति । "उभयवान्स्वरितः" (शु० य० प्रा० १।११०) इति च । प्रचयं निर्वक्ति—ऐक्यमिति। तत् तयोः । उदात्तानुदात्तयोरित्यर्थः । तदिति लुप्तविभक्तीकं पदम् । ऐक्यम् । उदात्तत्वादिभेदराहित्यम् । एव । प्रचयः एकश्रुतिरूपः स्वरः । प्रोक्तः । पाणिनीयादिभिरित्यत्रापि शिष्यते । तथाहि—"स्वरितात्संहितायामनुदात्तानाम्" ( पा० सू० १।२।३९ ) इति । "स्वरितात्परमनुदात्तमुदात्तमयम्" ( शु० य० प्रा० ४।१३९ ) इति च । एकश्रुतौ उदात्तानुदात्तयोगस्य अनुदात्ते उदात्तमयत्वविधानेनापि सूच्यते । मयटः प्राचुर्यार्थत्वादनुदात्तस्य उदात्तबाहुल्ये जातेऽर्थात् किंचिदनुदात्तमपि शिष्टम् इति भावः । एतेन प्रचयस्य स्वरितसमता स्पष्टैव । अतएव मात्राधिकारे आचार्यः "त्रैस्वर्यलक्षणं व्याख्यास्यामः" इति प्रतिज्ञाय "उदात्तश्चे" ( या० शि० स्व० प्र० १ ) ति परिगणय्य च हस्तचालनविधौ "उदात्तं तु भ्रुवः प्रान्ते प्रचयं नासिकाग्रतः" ( या० स्व० प्र० ५५ ) इति स्वरितमनुक्त्वा प्रचयमेव तत्स्थाने प्रोक्तवान् । अनयोः संज्ञाभेदस्तु "प्रचयोयत्रे" ( या० शि० स्व० प्र० ६० ) त्यादिना स्वरितस्य हस्तचालनविध्युक्ततीक्ष्णत्वमृदुत्वविधानार्थः । जात्यादि ( या० शि० स्व० प्र० ७६, ७७ ) संज्ञाकरणवत् । तथाहि—"एकपदे नीचपूर्वः सयवोजात्यः" "परस्परंमृदुस्त्वन्यः" ( शु० य० प्रा० १।१११-१२५ ) इति प्रक्रम्य "ताद्दणोऽभिनिहितः" अत्र क्षैप्रे जात्यस्यान्तर्भावः । स्वरित एव तत्तत्संज्ञां प्राप्य तीक्ष्णत्वादिगुणानुपालभते तथाचोक्तम्—"सर्वतीक्ष्णोऽभिनिहितः प्रश्लिष्टस्तदनन्तरम् । ततो मृदुतरौ स्वारौ जात्यक्षैप्रावुभौ स्मृतौ ॥ ततो मृदुतरः स्वारस्तैरो व्यञ्जन उच्यते । पादवृत्तोमृदुतमस्त्वेतत्स्वारबलाबलमिति ( शु० य० प्रा० १।१२५ ) उव्वटभाष्ये । तदेवाह—**सन्धिरिति** । एषः पूर्वोक्तः । सन्धिः उच्चनीचैक्यरूपः । स्वरितप्रचयजात्याद्यन्यतमः । मिथः परस्परम् । अद्भुतः तीक्ष्ण-मृदु-मृदुतर-मृदुतमान्यतमविलक्षणः । आचार्यैरुक्त इति । शेषः । एषामिति पाठपक्षे—एषां स्वरितादिषु । सप्तम्यर्थे षष्ठी व्याख्येया ॥ ६० ॥

नतु उच्चनीचयोगोत्पन्नस्य स्वरितस्य कस्मिन्नंशे उदात्तत्वं कुत्र वाऽनुदात्तत्वमित्याशङ्क्याह—

**मात्रिकं वा द्विमात्रं वा स्वरितं यदिहाक्षरम् ।**
**तस्यादितोर्द्धमात्रा वै शेषं च परतो भवेत् ॥ ९१ ॥**

इह संहितायाम् । मात्रिकम् । वा । द्विमात्रम् । वा । स्वरितम् । यद् । अक्षरम् । तस्य । आदितः । अर्धमात्रा ( अर्द्धम् ) उदात्तस्य । परतः अन्त्यार्धमात्रा ( अन्त्यार्द्धम् ) । शेषम् अनुदात्तम् । भवेत् । पाणिनिसंवादात् । यथाह—"तस्यादित उदात्तमर्धह्रस्वम्" ( १।२।३२ ) इति ह्रस्वग्रहणमविवक्षितम् ॥ ९१ ॥

एवं स्वरप्रकरणमुपसंहरन् नीचोच्चसम्पन्ने स्वरिते हस्तचालनमूर्ध्वमधो वेत्याशङ्क्याह—

**उच्चस्थानगते हस्ते स्वरितं नोपपद्यते ।**[१]
**अधस्तात्तु यदा गच्छेत् स्वरितं न तदा भवेत् ॥९२॥**[२]

इति श्री याज्ञवल्क्यशिक्षायां स्वरप्रकरणम् ॥

हस्ते उच्चस्थानगते भ्रुवः प्रान्ते नीते सति स्वरितं नोपपद्यते । स्वरितैकदेशस्य उदात्तस्य प्रदर्शितेऽप्यनुदात्तस्याप्रदर्शनात् । यदा तु अधस्तात् हृत्प्रदेशे ( हस्तो ) गच्छेत् तदा ( अपि ) स्वरितं न भवेत् । स्वरितोत्तरार्धस्यानुदात्तस्य प्रदर्शने कृतेऽप्युदात्तस्याप्रदर्शनात् । इति मध्ये एव हस्तस्य स्थित्या स्वरितत्वमुपपन्नं स्यादिति भावः ॥ ९२ ॥

श्रीयाज्ञवल्क्यशिक्षाया वल्लीव्याख्या कृता मया ।
पूर्वार्धं तत्र संवृत्तं गोविन्दस्तेन तुष्यतु ॥ १ ॥

इति श्री योगिवरमहर्षियाज्ञवल्क्यप्रोक्तायां स्वरप्रकरणे
दीक्षितामरनाथशास्त्रिकृतायां शिक्षावल्ल्याख्यायां
विवृतौ स्वरसंहिताप्रकरणम् ॥

॥ पूर्वार्धं समाप्तम् ॥



---

१ एतद् व० प्र० ३३त्या अनन्तरम् पठितम् ङाति० ॥
२ एतदपि पूर्वश्लोकोत्तरम् पठितम् ग, च० । व० प्र० २२त्या अनन्तरम् घ० ॥

अथ

# याज्ञवल्क्यशिक्षायामुत्तरार्द्धे

## वर्णप्रकरणम् ॥

नीलोत्पल-दल-श्यामं बर्हि-बर्हावतंसकम् ।
धृत-गोवर्द्धनं देवं श्रीनाथं प्रणमाम्यहम् ॥ १ ॥

अथ "मन्त्रो हीनः स्वरतो वर्णतो वा मिथ्याप्रयुक्तो न तमर्थमाहेति शिक्षाऽऽम्नातक्रमेणोदात्तादिस्वरप्रकरणं पूर्वार्धेन व्याख्याय संप्रति वर्णान् सामान्यतो विशेषतश्च समुद्दिश्य वर्ण-दैवत-लिङ्गानि पृच्छति—

**स्वरा[1]ः । स्पर्शान्तस्थोष्माणः । कण्ठ्य-जि[2]ह्वामूलीय-तालव्य-मूर्धन्य-दन्त्यो-ष्ठ्य- यमा[3]-ऽनुस्वार-विसर्जनी-योपध्मानीय-नासिक्या-ऽनुनासिक्य-रङ्गाः । नामा-ऽऽख्यातो पसर्ग-निपाताश्च किंवर्ण-दैवत-लिङ्गाः ॥**

स्वराः । स्पर्शेत्यादिना—स्वराः अकारादयो ह्रस्व-दीर्घ-प्लुताः । यथा—अ आ-आ ३, इ-ई-ई ३, उ-ऊ-ऊ ३, ऋ-ॠ-ॠ ३, ऌ ॡ-ॡ ३, ए-ए ३, ऐ-ऐ ३, ओ-ओ ३, औ-औ ३, इति त्रयोविंशतिः । लौकिके[4]वर्णसमाम्नायोक्ताः । स्वरा इत्यसमस्तनिर्देशः 'स्वर्यंते

---

१ रस्प ग, च ज० ॥ २ ख्यताल क, ख, घ० । ख्य जि० योपध्मानीयता ग० ॥

३ मा विसर्जनीयनिपाताद्याश्च किं व क, ख० । यमविस० यरङ्गाऽनुनासिक्यनि-पाताद्याश्च किं व ग० । यमवि० यजि० योपध्मानीयनासिक्याऽनुनासिक्यारङ्गाद्याश्च किंव घ० । यमविसर्जनीया निपाताद्याश्चाश्च किं व च, ज० ॥

४ अत्र शिक्षायामाचार्यपादैः ( ककारादयोमकारावसानाः स्पर्शा या० शि० व० प्र० ६३ ) इत्यादि प्रदर्शयद्भिः कः वर्णसमाम्नाय इति विशेषतोनिर्णीतो न दृश्यते ।

शब्यते व्यञ्जनमेभिः, स्वेन राजन्त इति वा व्युत्पत्त्या स्वराणां प्राधान्यबोधनाय ॥

इत्थं स्वरानुद्दिश्य व्यञ्जनानि निर्दिशति—**स्पर्शाऽन्तस्थेति** । स्पर्शाः ककारादयो मकारावसानाः । यथा—कखगघङ । चछजझञ । टठडढण । तथदधन । पफबभम । इति । पञ्चविंशतिः च । अन्तस्थाः यरलवा इति चत्वारश्च । ऊष्माणः शषसहा इति चत्वारश्च । ते स्पर्शान्तस्थोष्माणः । एवं त्रयस्त्रिंशद्व्यञ्जनानि ।

इत्थं सामान्येन स्वरादिभेदेन निर्दिश्य विशेषतया निर्दिशति **कण्ठ्यादिना** ।—कण्ठ्याद्योष्ठ्यान्ता अनुपदं व्याख्यास्यमानाः वर्णसमाम्नायोक्ताः अकारादयः । ये च वर्णसमाम्नाये निर्दिष्टा न सन्ति किन्तु प्रयोगं निर्वाहयन्ति ते ऽयोगवाहाः यमादयो रङ्गान्ताश्च पृथगुपदेक्ष्यमाणाः वर्णाः । तथा । नामादयो वर्णसमूहरूपाणि पदानि च । किं वर्णकाः । किं रूपकाः, किं जातीयाश्च । अत्र वर्ण-

---

एवं कात्यायनमहर्षिरपि 'अथातो वर्णसमाम्नायं व्याख्यास्यामः, इत्यारभ्योपक्रम्य "तत्र स्वराः प्रथमम्, अथ सन्ध्यक्षराणि, इति स्वराः, अथ व्यञ्जनानि, इति स्पर्शाः' ( शु० य० प्रा० ८ । १-१४ ) इत्यादि चतुर्दशसूत्रैः स्वरादियमान्तवर्णानुपदिश्य "एते पञ्चषष्टिवर्णा ब्रह्मराशिरात्मवाचः" इत्युपसंगृह्य "त्रयोविंशतिरुच्यन्ते स्वराः शब्दार्थचिन्तकैः । द्विचत्वारिंशद् व्यञ्जनान्येतावान्वर्णसंग्रहः" ( शु० य० प्रा० ८।२८ ) इति वर्णसमाम्नायं प्रतिसंख्याय "तस्मिंल्लृह्लजिह्वामूलीयोपध्मानीयनासिक्या न सन्ति माध्यन्दिनानाम् ॥ लृकारो दीर्घः प्लुताश्चो ( अग्ना३इ लाजी ३ञ्छाची ३नित्येवमादयो ये परिगणिताः "शु० य० प्रा० २।५०-५४" तद्व्यतिरिक्त ) स्तवर्जम्" शु० य० प्रा० ८ । २९-३० इति कतिपयवर्णान् माध्यन्दिनेषु प्रतिख्यातवान् नत्वानुपूर्व्येण प्रदर्शितवान् । अत्र प्रथमसूत्रव्याख्यानावसरे उव्वटाचार्यः—अथातः शब्दाद्व उक्तार्थावर्णा यस्मिन् समाम्नाये पठ्यन्ते स वर्णसमाम्नायस्तं व्याख्यास्यामः इति प्रतिज्ञासमाधानार्थम् । इति ॥ ततः अग्रिमसूत्राणां व्याख्याने अकारादिहकारान्तां लोकप्रसिद्धामानुपूर्वीम् "अ इति, आ इति, आ ३ इति" इत्यादिरीत्योदाहृत्याऽयोगवाहानुदाजहार ।

एवम् तैत्तिरीयप्रातिशाख्ये प्रथमत एव "अथ वर्णसमाम्नायः । १।१४ ( अत्र माहिषेयभाष्यम् वर्णानां समाम्नायो वर्णसमाम्नायः । ······आम्नाय इत्यानुपूर्व्येण अकारादयो यमपर्यवसानाः पूर्वाचार्यैरुपदिष्टा वर्णाः । यथा अ आ आ३, इ ई ई३, उ ऊ ऊ३, ऋ ॠ, लृ, ए, ऐ, ओ, औ, क ख ग घ ङ, च छ ज झ ञ, ट ठ ड ढ ण, त थ द ध न, प फ ब भ म, य र ल व, श ष स ह, कं खं गं घम् इति । ) इत्युपक्रम्य 'षोडशाऽऽदितः स्वराः १।५। शेषा व्यञ्जनानि १।६। "आद्याः

पदस्य रूपजातिवाचकयोर्द्वयोरेकशेषेणप्रयोगः । किं दैवताः । किं लिङ्गाः । ( सन्तीतिशेषः ) इतिप्रश्नः ।

उत्तरयति—

तत्र स्वराः शुक्ला नानादैवत्याः । स्पर्शाः कृष्णाः । अन्तस्थाः कपिलाः । ऊष्माणोऽरुणाः । यमा नीलाः । अनुस्वारः पीतः । विसर्जनीयः श्वेतः । जिह्वामूलीयो रक्तः । उपध्मानीयः पीतः । नासिक्यो हरितः । अतिनीला अनुनासिक्याः । शबलो रङ्गः ॥३॥

तत्र स्वरा इति ।—यमाः कुं खुं गुं घुं इति अपञ्चमै ( या. शि. व. प्र. ९६ ) रित्यादौ वक्ष्यमाणाः चत्वारः । ( वर्गेष्वाद्यानां चतुर्णां पञ्चमे परे यमो नाम मध्ये पूर्वसदृशो वर्णः । इत्थं विंशतिः । चतुष्ट्वन्तु वर्गाद्यत्वेन वर्गद्वितीयत्वेन वर्गतृतीयत्वेन वर्गचतुर्थत्वेन

---

पञ्चविंशतिः स्पर्शाः " ।१।७ " पराश्चतस्रोऽन्तस्थाः " १।८ । " परे षडूष्माणः " ।१।९। अत्र माहिषेयभाष्यम्—अन्तस्थेभ्यः परे ये वर्णाः षट् ते ऊष्मसंज्ञा भवन्ति यथा— ≍ क श ष स ≍ प ह इति । इत्युपगृहीतो वर्णसमाम्नायः ।

एवम् ऋक्प्रातिशाख्यमस्य वर्णसमाम्नायस्याऽऽनुपूर्वीप्रदर्शने पूर्ववदेवोदास्ते । तथा च प्रातिशाख्यम् " अष्टौ समानाक्षराण्यादितः १ प. १ सू० इत्यारभ्य "उत्तरेऽष्टा ऊष्माणः" १ प० १० सू० इत्यन्तम् ॥ अत्र प्रकरणे स्वरव्याख्यानावसरे उव्वटाचार्यः स्वर्यन्ते शक्यन्ते इति स्वराः । यथा अ आ ऋ ॠ इ ई उ ऊ ए ओ ऐ औ इति । अग्रे अनुपदिश्य वर्णसमाम्नायं । कथम् । " अष्टौ समानाक्षराण्यादित इत्याशङ्क्य उपदिष्टो वर्णसमाम्नायो लौकिको विद्यते इत्याह ॥

पाणिनीयशिक्षायामपि " स्वरा विंशतिरेकश्च स्पर्शानां पञ्चविंशतिः । यादयश्च स्मृता ह्यष्टौ चत्वारश्च यमाः स्मृताः " इत्यानुपूर्वीरहिता संख्यैव प्रदर्शिताऽस्ति । तदेवम् वर्णसमाम्नायस्य आचार्यैरानुपूर्वीं विनैव स्वरादिक्रमः "परमतमप्रतिषिद्ध मनुमतं भवती' ति रीत्या लोकप्रसिद्धा एवाऽऽनुपूर्वी अकारादिक्रमिकाऽत्र गृह्यते । अइउणित्यादि पाणिनिपरिगृहीतो महेश्वराऽनुक्रमस्तु कादिमावसानाद्यानुपूर्व्यभावान्न गृहीतुं शक्यते । तथा च लौकिकोऽयं वर्णसमाम्नायः प्रदर्शितरीत्या चतुर्धा पाठ-क्रमेण विभक्तः प्रतिभाति । तत्र तत्तच्छाखीयवैदिकव्यवहारव्यवस्थिताऽऽनुपूर्वीक एव वर्णसमाम्नायस्तत्तच्छाखासु ग्राह्यः ।

चेति बोध्यम् ) नीलवर्णाः ॥ अं इत्यचः परो ऽनुस्वारः त्रिविधोऽथ्ंकारः पीतवर्णः ॥ हुँ इति नासिक्यः ( नासामात्रेणोच्चारणात् ) हरितवर्णः ॥ अनुनासिक्याः अँ इत्यचः परोऽर्धानुस्वारः शरः पूर्वो रेफवर्जाद्यणः पूर्वश्च तथा वर्गपञ्चमाः ( मुखसहितनासिकयोच्चारणात् ) अतिनील वर्णाः ॥ रङ्गः अँ इत्यचः परोऽर्धानुस्वारः रेफात्पूर्वो ऽचः पूर्वश्च सार्धैकाङ्कयुतः सार्धद्व्यङ्कयुतो वा । शबलः चित्रवर्णः ॥ ज्ञेय इति सर्वत्र यथायथमूह्यः । शेषं निगदव्याख्यातम् ॥

दैवतान्याह—

कण्ठ्या आग्नेया अकारादयः । जिह्वामूलीया नैर्ऋत्याः ककारादयः । तालव्याः सौम्याश्चकारादयः । मूर्द्धन्या वायव्याष्टकारादयः । दन्त्या रौद्रास्तकारादयः । ओष्ठ्या आश्विनाः पकारादयः । शेषा वैश्वदेवा यमादयः[3] ॥ ४ ॥

कण्ठ्या[2] आग्नेया इति ।-शेषाः उक्तारिक्ताः । यमादयः यमाऽनुस्वार-नासिक्याऽनुनासिक्य-रङ्गाः रेफश्च । वैश्वदेवाः विश्वेदेव-देवत्याः । शेषं स्पष्टम् ॥

अथाऽक्षराणां जातीः –

स्वरास्तु ब्राह्मणा ज्ञेया वर्गाणां प्रथमाश्च ये ।
द्वितीयाश्च तृतीयाश्च चतुर्थाश्चापि भूमिपाः ॥१॥

---

१ अत्र 'इत्यन्तर्मध्यमयोर्नासिक्यं विद्यात् । द्विरुदात्ताख्या इति स्मृताः । उदमनुदनिपाते आद्ये ये चोपसर्गे नामाख्यातोपसर्गनिपाताश्चेति । किंदेवत्याः । अक्षराणां च के पुरुषाः । काः स्त्रियः । कानि नपुंसकानि । इत्यत्र ब्रूमः । इत्यधिको दृश्यते क, ख, ग, घ० ।

२ ता च० । ३ वा अं इत्येवमादयः क, ख० । वा इत्येवमादयः ग, घ० । वा मु० च० ।

४ शु० य० प्रा० शा० १ अध्याये ६५सूत्रतः स्थानकरणविवेको द्रष्टव्यः ।

**वर्गाणां पञ्चमा वैश्या अन्तस्थाश्च तथैव च ।**
**ऊष्माणश्च हकारश्च शूद्रा एव प्रकीर्त्तिताः ॥ २ ॥**

स्वरास्त्विति द्वाभ्याम् ।—स्वराः अकारादयः । ब्राह्मणाः ब्राह्मणजातयः । ज्ञेयाः । च पुनः । ये वर्गाणाम् कवर्गादिपञ्चकानाम् । प्रथमाः आद्याऽक्षराणि क च ट त पाः इति । तथा द्वितीयाः, ख छ ठ थ फाः, इति । तृतीयाः ग ज ड द बाः, इति । चतुर्थाः घ झ ढ ध भाः, इति । अपि तु । भूमिपाः क्षत्रियजातयः । ज्ञेयाः इत्यनुवर्त्तते ॥ १ ॥

वर्गाणां कवर्गादिपञ्चकानाम् मध्ये ये पञ्चमाः ङ ञ ण न माः ते वैश्यजातयः । च पुनः । अन्तस्थाः य र ल वाः । तथैव । वैश्यजातयः एव । ज्ञेयाः । ऊष्माणः स ष श हाः । च पुनः । हकारः औरसः । तस्य पृथगुक्तेः । शूद्रजातय एव प्रकीर्त्तिताः । बुधैरिति शेषः ॥ २ ॥

पदानां वर्ण-गोत्र दैवतान्युच्यन्ते —

तत्र रूपाणि ।

**शुक्लवर्णानि नामानि आख्याता रोहिता मताः ।**
**कपिलास्तूपसर्गाश्च कृष्णाश्चैव निपातकाः ॥३॥**

शुक्लवर्णेति—नामानि रामो हरिः करी भूभृदित्यादीनि । शुक्ल रूपाणि । आख्याताः भवतीत्यादयस्तिङन्ताः । रोहिता रक्तवर्णाः । मता आचार्यैरिति शेषः । उपसर्गाः प्रादयस्तु । कपिलवर्णाः । निपातकाः चादयः । निपाता एव निपातकाः इत्यव्ययमात्रोपलक्षकम् । कृष्णवर्णाः । मताः ॥ ३ ॥

---

१ श्च तका घ० । श्च विसर्गश्च च० ॥

२ कपिलो रक्तपीतः । भूरा, इति भाषायाम् अयमत्यन्त-गौर-बालकस्य केशवर्णे ख्यातः ॥ कपिञ्जलास्तूपसर्गा निपाताः कृष्णवर्णकाः । क, ख, घ० ।

अथ पदगोत्राणि ।

भारद्वाजकमाख्यातं भार्गवं नाम भाष्यते ।
वसिष्ठा उपसर्गाश्च[1] निपाताः काश्यपाः स्मृताः ॥४॥

भारद्वाजेति ।—आख्यातम् भारद्वाजगोत्रम् । नाम भार्गवगोत्रम् । भाष्यते प्रोच्यते । उपसर्गाः वाशिष्ठगोत्राः निपाताः काश्यपगोत्राः स्मृताः आचार्यैरिति शेषः तदुक्तम् शु० य० प्रा० शा० ८.५० सूत्रे ॥ ४ ॥

अथ पद-दैवतानि

सर्वन्तु सौम्यमाख्यातं नाम वायव्यमिष्यते[2] ।
आग्नेयस्तूपसर्गः स्यात् निपातो वारुणः स्मृतः ॥५॥

सर्वान्त्विति ।—सर्वमेव । आख्यातपदम् । सोमदेवत्यम् । नामपदं वायुदेवत्यम् । इष्यते । आचार्यैरिति शेषः । उपसर्गस्तु । अग्निदेवत्यः । स्यात् । निपातः वरुणदेवत्यः स्मृतः । मुनिभिरिति शेषः । तदुक्तम्—शु० य० प्रा० शा० ८।५२ सू० ॥ ५ ॥

पददैवत्येऽक्षरदैवत्ये च पक्षान्तरमाह—

आदित्यो मुनिभिः प्रोक्तः सर्वाक्षरगणस्य च ।

आदित्य इति । मुनिभिः सर्वेषामक्षराणाम् गणस्य चकारात्पदस्य च देवता आदित्यः प्रोक्तः ।

अथाऽक्षरलिङ्गानि—

स्वरा विसर्जनीयाश्च यमाः पुँल्लिङ्गकाः स्मृताः ॥६॥
प्रथमाश्च[4] तथाऽन्तस्था स्त्रीलिङ्गाः परिकीर्त्तिताः ।
शेषाक्षराणि षण्ढानि प्राहुर्लिङ्गविवेचकाः ॥ ७ ॥

---

१ भार्गवगोत्राणि नामानि भारद्वाजा आख्याताः । क, ख० ॥ २ स्तु इति० अस्य श्लोकस्यान्ते—'पीतवर्णश्चोपसर्गो निपातः कृष्णवर्णकः' इत्यधिकः पाठः क, ख, ॥ ३ व्यं दृश्यते क, ख० ।

४ पञ्चमा च० ॥

स्वरा विसर्जनीया इति । स्वर-विसर्ग-यमाः पुँल्लिङ्गाः स्मृताः । मुनिभिरिति शेषः ॥ ६ ॥ वर्गेषु प्रथमाः । तथा । अन्त-स्थाः । स्त्रीलिङ्गाः । परिकीर्त्तिताः । मुनिभिः । शेषाक्षराणि ये वर्गेषु द्वितीयतृतीयपञ्चमा ऊष्माणोऽनुस्वार-जिह्वामूलीयो-पध्मानीय-नासिक्या-ऽनुनासिक्य-रङ्गाश्च । षण्ढानि नपुंसकलिङ्गानि । लिङ्ग विवेचन कर्तार आचार्याः । प्राहुः वदन्ति ॥७॥

इति श्री योगिवर याज्ञवल्क्य महर्षि प्रोक्तायां शिक्षायां वर्ण-प्रकरणे दीक्षिताऽमरनाथशास्त्रिकृतायां शिक्षावल्ल्या-ख्यायां विवृतौ वर्ण-दैवताद्यधिकारः प्रथमः ।

## अथ सन्धयः ॥

एवं वर्णानां संज्ञावर्णदैवत्यादि प्रदर्श्य तत्संस्कारप्रदर्शनार्थं पूर्वं सन्धिभेदानाह—

सन्धिश्चतुर्विधो भवति लोपाऽऽगमविकाराः प्रकृतिभावश्चेति । तत्र लोपो यथा—अयक्ष्माः मा, अयक्ष्मामा ( शु० य० सं० १।१ ) । शततेजाः व्वायुः, शततेजाव्वायुः ( शु० य० सं० १।२४ ) । तिग्मतेजाः द्विषतः, तिग्मतेजाद्विषतः । ( शु० य० सं० १।२४ ) । इति । आगमो यथा—प्रत्यङ्सोमं,

१ एतत् वर्णऋष्यादिज्ञानम् अर्थाऽनभिज्ञस्यापि फलप्रदं भवति । इत्युक्तम् कात्यायनेन ( शु० य० प्रा० ८।२६-२७ ) "अथापि भवतीत्यादिना । व्याख्यातं च तत्र भाष्ये उव्वटाचार्यैः । तथा — सर्वानुक्रमसूत्रे च अर्थज्ञानं तु विशेषफलप्रदम् । एतान्यविदित्वेत्यादिना । तस्मादर्थज्ञाने ऽशक्तेन पुंसा पुरुषार्थं चतुष्टयोपपत्तौ याज्ञिकेना ऽवश्यं भाव्यम् । इति प्रतिपादितं चाऽस्माभिः शिक्षाव्याख्यानारम्भे एव टिप्पण्यां प्रकाशितं च ॥ २ म वर्णत्रि घ० ।

प्रत्यङ्क्सोमः (शु० य० सं० १०।३१) । प्राङ् सोमः, प्राङ्क्सोमः (शु० य० सं० १९।३) । अस्मान् सीते, अस्मान्त्सीते (शु० य० १८।६१) । त्रीन् समुद्रान् त्रीन्त्समुद्रान् (शु०य०सं० १३।३१) । इति । विकारो यथा—आ इदम्, एदम् (शु० य० सं० ४।१) । आ इमे, एमे (शु० य० सं० ३३।६०) आ इष्टयः, एष्टयः (शु० य० सं० १८।८१) प्र इषितः, प्रेषितः (शु० य० सं० २१।५१) । इति । प्रकृतिभावो यथा-आशुः शिशानः, आशुःशिशानः (शु० य० सं० १७।३३) । युञ्जानः प्रथमम्, युञ्जानःप्रथमम् (शु० य० सं० ११।१) । अदितिः षोडशाक्षरेण, अदितिःषोडशाक्षरेण (शु० य० सं० ९।३४) इन्द्राग्नी+आगतम् । इन्द्राग्नीऽआगतम् (शु० य० सं० २।३१) नमो+अस्तु, नमोऽअस्तु (शु० य० सं० १६।६४) । इति ॥

सन्धिरिति । लोपः (वर्णस्याऽदर्शनम्) । आगमः (वर्णोपजनः) । विकारः (आदेशः) । प्रकृतिभावः (स्वकीयेन रूपेण अवस्थानम्) । इति भेदात् । सन्धिः संहिता । चतुर्विधः । भवति । उदाहरणानि मूले स्पष्टानि ॥

अधुना प्रकृतिभावे विवृत्तेः स्वरूपं प्रदर्शयिष्यन् प्रथमं तदुच्चारणप्रकारमाह—

**आकाशस्था यथा विद्युत् स्फुटिता मणिसूत्रवत् ।**
**एषच्छेदो विवृत्तीनां यथा वालेषु कर्तरी ॥ ८ ॥**

आकाशस्थेति ।—यथा । आकाशस्था । विद्युत् । मणिसूत्रेण तुल्यं ( वेगेन ) स्फुटिता सती ( शब्दिताभवतीतिशेषः ) एषः विद्युत्स्फोटशब्दः । विवृत्तीनां छेदः । अर्थात् यावत्कालं स्फुटिता सती विद्युत् ध्वनति तावत्कालं विवृत्तीनां छेदं कृत्वोच्चारणं कर्तव्यम् । ध्वनिं दृष्टान्तयति—यथा वालेषु केशेषु ( कर्त्तनकाले ) कर्त्तरीः केशनिकृन्तनी । वेगेन 'कटक्' इति ध्वनिं करोति तद्वदत्रापि विवृत्तेरुच्चारणे ध्वनिर्विधेयः ॥ ८ ॥

विवृत्तिस्वरूपमाह—

**द्वयोस्तु स्वरयोर्मध्ये सन्धिर्यत्र न दृश्यते ॥**
**विवृत्तिस्तत्र विज्ञेया 'षऽईशे' दुं निदर्शनम् ॥ ९ ॥**

द्वयोस्त्विति ।—यत्र । द्वयोः स्वरयोर्मध्ये सन्धिः न दृश्यते । तत्र । विवृत्तिः । विज्ञेया । यथा—'षऽईशे' ( शु० य० सं० २३।३ ) इत्युदाहरणे षः इति पदस्थस्य विसर्गस्य "कण्ठ्यपूर्वो यकारमरिफितः ( शु० य० प्रा० ४।३७ ) इति यत्वे । " यवयोः पदान्तयोः स्वरमध्ये लोपः ( शु० य० प्रा० ४।१२५ ) इति तस्य लोपे । अकार-इकारयोः स्थाने "कण्ठ्यादिवर्णे एकारम् ( शु० य० प्रा० ४।५३ ) इति एकारसन्धौ प्राप्ते "न परकालः पूर्वकाले पुनः ( शु० य० प्रा० ३।४ ) इति निषिद्ध्यते । तेन विवेकेन पृथग्भावेन वर्त्तते इति विवृत्तिरिति निरुक्तया 'ष' इतिपदम् 'ईशे' इति पदात् विच्छिद्योच्चार्यं मध्ये याऽर्धमात्रिका विरतिः सन्ध्यभावात् भवति सा विवृत्तिः । अतएवार्धमात्रोच्चारणज्ञापकं खण्डाकारचिह्नं (ऽ) दीयते वैदिकैः । नारदोऽपि "चतसृणां विवृत्तीनामन्तरं मात्रिकं

---

१ तं म क० ॥ २ ति च०॥

भवेत् । अर्धमात्रिकमन्येषामन्येषामणुमात्रिकम्" ॥ ( ना० शि० कं० ३ का० ४ इति ॥ शाखाभेदेन विकल्प इति शुभाकरभट्टोऽप्यस्य व्याख्याने कथितवान् । किञ्च—निमेषो मात्राकालः स्याद्विद्युत्कालस्तथापरे इत्यत्रोक्तो यो विद्युत्कालपरिमेयो लौकिको मात्राकालः स एवात्र वेदे द्विगुणितायाः मात्रायाः अर्धेनसम इत्यर्धमात्रिकत्वम् ॥

विवृत्तिभेदानाह—

**पिपीलिका पाकवती तथा वत्सानुसारिणी ।**
**वत्सानुसृजिता चैव चतस्रस्ता विवृत्तयः ॥ १० ॥**

**पिपीलिकेति** ।—ताः पूर्वोक्तलक्षणलक्षिताः विवृत्तयः पिपीलिका, पाकवती, वत्सानुसारिणी, वत्सानुसृजिता (इत्थम्) चतस्रः सन्तीति शेष ॥१०॥

तासां लक्षणमुखान् दृष्टान्तानाह—

**पिपीलिकाऽऽद्यन्तदीर्घा 'नाभ्याऽआसीन्निदर्शनम् ॥**
**पाकवत्युभयोर्ह्रस्वा "त्विनऽइन्द्रेति दर्शनम् ॥ ११ ॥**
**वत्सानुसारिणी चादौ दीर्घा 'ताऽअस्य' दर्शनम् ॥**
**अन्तेवत्सानुसृजिता 'तानऽआवोढमश्विना' ॥१२॥**

**पिपीलिकाऽऽद्यन्तेति** ।—विवृत्तेरादावन्ते च स्थौल्यं दीर्घाक्षरसंभवात् । मध्ये च स्वस्या निपतनात् कार्श्यत्वेन पिपीलिकाजन्तुसादृश्यम् । तस्मादस्या अपि पिपीलिकात्वम् । यथा—'नाभ्याऽआसीत्' ( शु. य. सं. ३१।१३ ) इत्यत्रोभयतोदीर्घयोगात्स्पष्टाश्रुतिः । ह्रस्वद्वययोगाद्ग्रस्यमानतया पाको बोध्यः । यथा-'त्विनऽइन्द्र' ( शु. य. सं. ८।४४ ) इत्युदाहरणे

१ यथा ग० ॥ २ नु संसृता चैव चतस्रस्तु त्रि क, ख० । तत्र एतत्पद्यानन्तरम् 'पञ्चरङ्गाः प्रवर्त्तन्ते घात-निर्घात-वज्रिणः । अहरः प्रहरो ज्ञेय अ इ उ ऋ ओ निदर्शनम्'' इत्यधिकं च दृश्यते ॥ ३ का आद्य क, ख० ॥ ४ सीदिति नि क, ख० ॥ ५ न्द्रेति निद क, ख० ॥ ६ स्येतिद क, ख० । एतदर्धमुत्तरार्धत्वेन विपर्यस्य च तत्र पठितम् ॥ ७ सृजिता तानेत्यसौ आवोढमश्विनेति नि० क० । अन्ते च वत्सानुसृजतातानऽआवोढमश्विनेति निद ख० ॥

विवृत्तेः पाकवतीत्वम् ॥ तेन अत्र विवृत्तेः स्वल्पाश्रुतिः प्रतीयते इत्यर्थः ॥ ११ ॥ दीर्घपिन्नयाह्रस्वस्यालपकायत्वाद् वत्सत्वम् । तमनुसरन्त्या विवृत्तेर्वत्सानुसारिणीत्वम् । यथा-'ताऽअस्य' ( शु. य. सं. १२।५५ ) इत्यत्र विवृत्तेरादौदीर्घत्वाद्वत्सानुसारिणीत्वम् । अत्रविवृत्तेर्ह्रस्वेन सह संबन्धात् तेन सहमिलितेव श्रुतिः श्रूयत इति भावः ॥ ह्रस्वेन संसृष्टतया विवृत्तेर्वत्सानुसृजितात्वम् । यथा- 'तानऽआवोढ' ( शु. य. सं. २०।८३ ) इत्यत्र विवृत्तेरन्ते दीर्घत्वादादिह्रस्वेन सहोच्चारणाच्च वत्सानुसृजितात्वम् । चतसृणामपि विवृत्तीनामुच्चारणकालस्तु अर्धमात्रिक एव। भेदप्रदर्शनं पुनः शिष्यबुद्धिवैशद्याय पूर्वाङ्गत्वद्योतनाय च बोध्यम् ॥ १२ ॥

"अर्शस" ( शु० य० सं० १२।६७ ) इत्यादौ "परंतु रेफहकाराभ्याम्" ( शु० प० प्रा० ४।१०१ ) इति ऊष्मणां संहिताकार्ये द्वित्वे प्राप्ते संहिताविघाताय रेफोष्मणां मध्ये स्वरभक्तिलक्षणां विरतिं भेदप्रदर्शनपुरस्सरंविवृणोति—

**करिणी कुर्विणी चैव हरिणी हरिता तथा ।**
**तद्वद्धंसपदा नाम पञ्चैताः स्वरभक्तयः ॥ १३ ॥**

करिणीति ।—१ करिणी, २ कुर्विणी, ३ हरिणी, ४ हरिता, ५ हंसपदा एताः पञ्चैव स्वरभक्तयः । भवन्तीति शेषः । ननु नामसंख्यानादेव पञ्चत्वलाभे किमिति पञ्चग्रहणम् । व्यर्थीभवताऽनेन मन्त्रे स्वरभक्तीनां न्यूनाधिकत्वं निरस्तम् । अतः । प्रतिज्ञासूत्रे कात्यायनेन रेफऋकारयोर्या स्वरभक्तिरधिकोक्ता, सा ब्राह्मणभागे पर्य्यवसिता ॥ १३ ॥

---

१ णी हरिणीति च । तथा हंसपदा नाम क. ख० ॥ २ पदीति च० च० ॥

३ अयमत्राऽभिप्रायः । मन्त्रशिक्षणपरेणाऽऽचार्येण "पञ्चैताः" इति नियमनात् मान्त्रिकैस्तु रेफऋकारयोगे स्वरभक्तिर्न प्रयुज्यते। प्रतिज्ञासूत्रस्य तु सर्वविषयकस्य मन्त्रमात्रविषयकेनाऽनेन वचसा बाधाच्च । न च "रलावित्यादि ( शु० य० प्रा० ४।१७) प्रातिशाख्ये ऊष्मण्येव विधानात्। तदीयपरिशिष्टे प्रतिज्ञासूत्रे "अथापरान्तस्थस्ये ( का० य० प्र० सू० २।३ ) त्यादौ ऋकारेऽपि विधानात् 'श्रुतिविरोधे विकल्पः' इति न्यायः स्वीकर्त्तव्यः । विकल्पस्याष्टदोषदुष्टत्वेन व्यवस्थितस्यैव मीमां-

ननु पञ्चानां स्वरभक्तीनां कुत्र केत्याकाङ्क्षायामाह—

**करिणी रहयोर्योगे कुर्विणी लहकारयोः ॥**
**हरिणी रशंयोर्योगे हरिता लशकारयोः ॥ १४ ॥**
**या तु हंसपदा नाम सा तु रेफषकारयोः ॥**

करिणीरहयोरिति ।-रेफहकारसंयोगेकरिणी नाम स्वरभक्तिः भवतीति शेषः । एवमुत्तरत्रापि लकारहकारसंयोगे कुर्विणी रेफशकार संयोगे हरिणी । लकारशकारयोगे हरिता ॥ १४ ॥

या तु हंसपदा नाम पञ्चमी स्वरभक्तिः । सा रेफमूर्धन्योष्म (षकार) योगे । ज्ञेयेति शेषः ॥

---

सकैः परिगृहीतत्वात् । सम्प्रदायविरोधाच्च । तथाहि "द्वैधीभावे समुत्पन्ने लक्षणान् निर्णयो भवेत् । लक्षणं वा विनाशि स्यात् सम्प्रदायो ऽविनाशवान्" इति । नारदीयायां च-"पञ्चविधमाचार्यकं नाम मुखंन्यासः करणं प्रतिज्ञोच्चारणा । अत्रोच्यते श्रेयः खलु वै सप्रतिज्ञोनोच्चारणा" ( ना० शि० २।७।६ ) इति । अस्यार्थः-आचार्यत्वं पञ्चभिः प्रकारैर्लभ्यते । के ते पञ्च प्रकारा इत्याह मुखेति-मुखम्-हस्ताग्रेद्दृष्टनिवेशादि १ ॥ न्यासः हृदयादिपु स्वरनिवेशः २ । करणम्-शिक्षादि शास्त्रम् ३ । प्रतिज्ञा गुरुपरम्परागतं मन्त्रस्वरूपावधारणम् ४ । उच्चारणा लक्षणागमानुसारेण प्रयोगः ५ । अत्र पञ्चसु मध्ये यः सप्रतिज्ञः सः खलु वै एव श्रेयः श्रेयान् ( सामान्ये नपुंसकम् ) नोच्चारणा लक्षणागमानुसारीप्रयोगः न श्रेयान् । कुत इत्याकाङ्क्षायामग्रिमं पद्यमाह—' यस्य कस्य चिद्वर्णस्य करणं नोपलभ्यते । प्रतिज्ञा तत्र बोढव्या करणं हि तदात्मकम् ' ( ना० शि० २।७।१० ) इति । अस्यार्थः-यस्य कस्य चिद्वर्णस्य करणं शिक्षादिशास्त्रं स्वरसंस्कारज्ञापकं स्पष्टं नोपलभ्यते न ज्ञायते तत्र तादृशवर्णविषये प्रतिज्ञा गुरुपरम्परागतमन्त्रस्वरूपावधारणं बोढव्या प्राप्तव्या । प्रमाणीकर्तव्येत्यर्थः । तेनैव निश्चयोविधेयः । इति भावः । यतः । करणम् शिक्षादि लक्षणशास्त्रम् । तदात्मकम् प्रतिज्ञात्मकम् । मन्त्रस्वरूपपरिज्ञानमनादिगुरुपारम्पर्याधीनमेवेत्यर्थः । अन्यथा । मन्त्राणामनादीनां कथं सादिलक्षणशास्त्रैः स्वरूपनिर्णयः । अतो गुरुपरम्परैव लक्षणानामात्मेति तदनुसारिण्येव व्यवस्था स्वीकर्त्तव्येति भावः ॥

१ रषयोर्योगे हारितं ऋषकारयोः क० । हारिता लऋषकारयोः ख० । एतद् द्वयमपि विरुद्धम् । उदाहृतप्रतीकविरोधात् ॥

२ एतत्पूर्वार्धस्थाने पठितम् ' हरिणी हरयोर्विद्यात्कुर्विणी लहकारयोः । इत्यधिकमर्धं पठितम् क० ख० । या तु हंसपदी नाम सा स्याद्रेफ च० ॥

अथैतासामुदाहरणस्थलान्याह –

'देवम्बर्हिश्च करिणी "उपवल्हेति कुर्विणी ॥ १५ ॥
हरिणी "दर्शतमिति 'शतवल्शेति हारिता ॥
व्वर्षोव्वर्षीयसीत्याहुस् तथा हंसपदेति च ॥ १६ ॥

देवंबर्हिश्चेति ।–देवंबर्हि ( शु० य० सं० २१।४८ ) रित्यत्र करिणी ज्ञेया । उपवल्हे ( शु० य० सं० २३।५१ ) त्यत्र कुर्विणी नाम स्वरभक्तिः । दर्शतमि (शु० य० सं० ११।३७) त्यत्र हरिणी स्वरभक्तिरस्ति । शतवल्शेति ( शु० य० सं० १२।१०० ) हारिता नाम सा ज्ञेया । व्वर्षोव्वर्षीयसी ( शु० य० सं० ६।११ ) त्यत्र हंसपदा नाम स्वरभक्तिरस्ति । इत्याहुः आचार्या इति शेषः ॥ १५ ॥ १६ ॥

अथ स्वरभक्तिं स्वरोदये सत्येव ऊष्मणि नियमयन् पूर्वाङ्गतां च तस्या आह––

रलाभ्यां पर उष्माणो यत्र स्युः स्वरितोदयाः ।
स्वरभक्तिरसौ ज्ञेया पूर्वमाक्रम्य पठ्यते ॥

यत्र यदा । रलाभ्यां परे । स्वरोदयाः अच्पराः । नतु व्यञ्जनोदयाः इत्यर्थः । ऊष्माणः शषसहाः । स्युः । तदा । असौ पूर्वोक्ता । रेफोष्ममध्यस्था इति यावत् । स्वरभक्तिः । ज्ञेया । तेन "वर्ष्य्याय" ( शु० य० सं० १६।३८ ) इत्यादौ न प्रयुज्यते व्यञ्जनपरत्वादूष्मणः । अतः षस्य द्वित्वम् । अत्र भवति । एषा च । पूर्वमाक्रम्य । रेफेण सहेत्यर्थः । पठ्यते प्रोच्यते ॥

---

१ र्हिरिति क० ङाति० ॥ २ उपह्वरेति क० ॥ ३ र्णी अरेपस इत्याहुर्हारिणी शतवल्हेति च क० । णीमरेपस इत्या···वल्शेति च ख० ॥

४ यतेसीति तथा क० ॥

५ "एतत् सर्वं समाख्यातं याज्ञवल्क्येन धीमता ' इत्यर्धमधिकम् ज० ॥

६ एष पाठः अधिकः । ख, ग, च, ज० । अतो निरङ्क एव व्याख्यातः प्रकृतोपकारित्वात् ॥

ननूष्मसंयोगे स्वरभक्तिः रेफलकारयोर्विहिता तत्र कः स्वरः प्रत्येतव्य इत्याह--

**स्वरभक्तिं प्रयुञ्जानस् त्रीन्दोषान् परिवर्जयेत् ॥**
**इकारं चाप्युकारं च ग्रस्तदोषं तथैवच ॥ १७ ॥**

स्वरभक्तेः प्रयोगङ्कुर्वाणो वैदिकः त्रीन् वक्ष्यमाणदोषान् परिवर्जयेत् । कान् दोषान् त्यजेदित्यत आह. इकारं च । अपि । च । उकारम् । च पुनः । ग्रस्तदोषम् स्थानकरणनिष्पीडनात्मिकां संवृतताम् इत्यर्थः । विवर्जयेत् । अर्थात्—एकारात्मिकैव स्वरभक्तिः कर्त्तव्या इत्युक्तं भवति । न चाऽकारोनाप्यैकारादयः । प्रतिज्ञासूत्रे तथा विधानात् । तथाहि-अथाऽपरान्तस्थस्याऽयुक्तान्यहलः संयुक्तस्योष्मऋकारैरेकारसहितोच्चारणम् । एवं तृतीयान्तस्थस्य, ( का० प० प्र० सू० २।३ ) इति " ऊष्मणामुपरिस्थस्तु रेफो याति रेवर्णताम् " इति व० र० दीपिका ५४ च ॥ रलाभ्यांपरः सकारो नोदाहृतः तादृशस्य दुर्ल्लभत्वात् । रेफात्परस्य मूर्द्धन्यादेशात् । लात्परस्यतु संहितायां प्रयोगाऽभावात् । प्रतिज्ञासूत्रोक्तऋकारयोगे स्वरभक्तिस्तु शतपथब्राह्मणपरेति पूर्वत्र प्रतिपादिता । अयं निषेधो माध्यन्दिनानामेव । सामवेदीयास्तु अकारमेव कुर्वन्ति । तथाहि—'नारदीयाशिक्षा-"श-ष-सेषु विवृत्ता तु हकारे संवृतां विदुः" (ना० शि० २।७) इति ॥ अथर्ववेदीया इकारम् । तथा च माण्डूकीशिक्षा 'सम्यगेनां यदापश्येच्छतवलिशेति दर्शनम् । अकारं चाप्युकारं च विच्छिन्नं विवृतं तथा " ( मा० शि० १०१ ) इति ॥ अपिच ऋग्वेद प्रातिशाख्येन 'धूर्षदम्' इत्यादावुकाररूपा "वर्हिषदः" इत्यत्र इकाररूपाऽपिप्रदर्शिता, एषा स्वरभक्तिरपि मात्रार्धकालिका भवति । तथाह "रला—" वित्यादि (शु० य० प्रा० ४।१७) भाष्ये उव्वटाचार्यः—ऋ लृ सदृशौ व्यञ्जनावर्द्धमात्रिकौ" इति । ऋग्वेदप्रातिशाख्ये च " द्राघीयसी साऽर्धमात्रा " ( ऋ० प्रा० १।३३ ) इति स्पष्टमुक्तत्वाच्च । अतएव । स्वरसादृश्यात्स्वरभक्तेर्न संयोगविघातकत्वम् । तथाहि—"न संयोगं स्वरभक्तिर्विहन्ति" (ऋ० प्रा० ६।३३) इति ॥१७॥

---

१ पूर्वोत्तरस्वरसरूपतां च ( ऋ० प्रा० ६।५३ ) । २ " द्राघीयसी तृष्मपरा " ( ऋ० प्रा० ६।४८ ) ।

एतल्लक्षणमाख्यातं याज्ञवल्क्येन धीमता ॥
सम्यक्पाठस्य सिद्ध्यर्थं शिष्याणां हितकाम्यया ॥१८॥

धीमता याज्ञवल्क्येन शिष्याणां हितकाम्यया ( यतो मन्त्राणां वर्णतोऽपि हीनपाठादनिष्टोत्पत्तिरतो मन्त्राणाम् ) सम्यक्पाठस्य सिद्ध्यर्थम् । स्वरभक्तेः एतत् । लक्षणम् करिणीत्यादिरूपम् । आख्यातम् ॥ वर्णानिति पाठे " एको वर्णः सम्यग् ज्ञातः सुष्ठु प्रयुक्त इति श्रुतिरनुग्राहिका बोध्या ॥ १८ ॥

अथ स्वरभक्तिप्रसङ्गेन यतः " रलावृलृवर्णाभ्या ( शु० य० प्रा० ४।१७ ) मित्यादिना ऋलृवर्णसादृश्यं स्वरभक्तेरुक्तं न तु तयोरुच्चारणप्रकारो दर्शितः । अतः--ऋऌकारयोरप्युच्चारण-प्रकारमाह-

अर्धमात्रास्वरं किञ्चित् पृथङ् न्यूनमिवोच्चरन् ॥
ऋकारे च ऌकारे च हृत्कण्ठमनसाऽपि च ॥१९॥

ऋकारे । च पुनः लृकारेऽपि । हृत्कण्ठमनसा । रलाभ्याम् । किञ्चित् । पृथक् । अर्धमात्रास्वरम् । स्वरभक्तिस्वरम् एकार-सदृशम् इत्यर्थः । न्यूनमिव एकारोच्चारणतोऽल्पमेव । उच्चरन् । नतु द्विमात्रिकैकारोच्चारणरूपां स्वरभक्तिं प्रयुञ्जीतेत्यर्थः। हृत्कण्ठमनसेत्य-त्रैकत्वं तु प्राण्यङ्गत्वात् । अत एवाऽस्पृष्टता प्रतिषिद्धा वर्णरत्न-प्रदीपिकाकारेण ' ऋलोर्मध्ये भवत्यर्धमात्रा रेफलकारयोः । तस्माद-स्पृष्टता न स्यात् सम्भवे ( उत्पत्तौ ) ऋलृकारयोः ( व० र० प्र० शि० ४२ ) इति । तथापि रेफलकाराभ्यामज्भक्तेरत्र पार्थक्यं नेत्याह कात्यायनः ' ऋलृवर्णयो रेफलकारौ संश्लिष्टावश्रुतिधरावेकवर्णौ ( शु० य० प्रा० ४।१४६ ) इति । एतत्सर्वं मनसि निधायाह प्रतिज्ञा-सूत्रकारः' ऋकारस्य तु संयुक्ताऽसंयुक्तस्याविशेषेण सर्वत्रैवम् ( का० प० प्र० सू० २।५ ) इति । सर्वत्र मन्त्रब्राह्मणादौ । एकारस-हितोच्चारणम् एकारसदृशोच्चारणसहितोच्चारणम् । तेन तत्र स्वरभक्तौ क्षिप्रता सूचिता । यथाश्रुतव्याख्याने तु द्विमात्रिकत्वापत्तिः । नच 'ऋति ऋ वे ( सि० कौ० ८५ ) त्यत्र द्विमात्रिकविधानादत्रापि

१ ग्वर्णान् प्रयुञ्जानो ब्रह्मलोके महीयते च, ज० ॥

द्विमात्रिकत्वं शङ्क्यम् । तत्र कैयटादिभिर्वर्णान्तरत्वेन तस्य स्वीकृतत्वात् । उक्तं च लघुमाध्यन्दिनशिक्षायाम् "ऋकारः खलु सर्वत्र ह्येकारसदृशो भवेत् ।" ( ल० मा० शि० २८ ) इति । यथा - कृष्णोसी ( शु० य० सं० २।१ ) त्यत्र क्रेष्णोसीत्येवं रेफेण सह एकप्रयत्ननिर्वर्त्यः स्वरभक्तेः लघूच्चारः । क्लृप्तश्चमे ( शु० य० सं० १८।११ ) ऽत्र क्लेप्तश्चम इति च । अत्रलघूच्चारप्रकारो गुरुमुखत एवाऽवगन्तव्यः ॥ १९ ॥

अथानेकवर्णस्यैकवर्णत्वविधानप्रसङ्गात् ए-ऐ, ओ-औ इत्यत्राह-

**आद्या[1] मात्रा तु कण्ठ्यस्य एकारौ[2]कारयोर्भवेत् ।**
**तालव्यस्य तथौष्ठ्यस्य द्वितीया च यथा क्रमात् ॥२०॥**

एकारे ओकारे च आद्या मात्रा कण्ठ्यस्य अकारस्य भवेत् । द्वितीया मात्रा च यथाक्रमात् । अत्राव्ययीभावे 'नाव्ययीभावादतोऽम्त्वपञ्चम्याः' ( पा० २।४।८३ ) इतिपर्युदासेनामभावः । अर्थात्-एकारे । तालव्यस्य इकारस्य । ओकारे । ओष्ठ्यस्य उकारस्य भवेत् । तेनात्र न ह्रस्वता प्रत्येतव्येति भावः । ए-ओ ग्रहणम् ऐ-औ इत्यनयोरप्युपलक्षणम् । तथाहि--पाणिनिः । "ए-ऐ तु कण्ठतालव्या ओ-औ कण्ठोष्ठजौ स्मृतौ । अर्धमात्रा तु कण्ठ्यस्य ह्येकारैकारयोर्भवेत् ॥ ओकारौकारयोर्मात्रा, तयोर्विवृतसंवृतम्" ( पा० शि० १८-१९ ) इति । तयोः ए-ऐ, ओ-औ इति द्विकयोर्मध्ये क्रमेण द्विकपूर्वावयवयोरे-ओ इत्यनयोर्विवृतम् विवृततरमित्यर्थः । द्विकोत्तरावयवयोरै-औ इत्यनयोः संवृतमपि । अत्रानयोर्विवृततमत्वस्य २१ कारिकायां पाणिनिनोक्तत्वात्समुच्चयः इति भावः ॥ २० ॥

अथौकारप्रसङ्गेनोङ्कारस्य प्लुतस्थलं परिगणयति—

**ॐ[3]कारस्तु प्लुतो ज्ञेयः प्लुतमग्ना द्वितीयकम् ।**
**ला[4]जीनिति तृतीयञ्च शाचीनिति चतुर्थकम् ॥२१॥**

---

१ अर्द्धमा छ० ॥ अत्र २३-२५ माः कारिकाः पठिताः ज० । एतत् पद्यत्रयमत्र नास्तिङाति० । २ रैका छ० ।

३ ओकारः प्लुतविज्ञेयः ग० ॐ कारं तु प्लुतं ज्ञेयम् घ० ॥ ४ लाजीञ्छाचीं तृतीयं च विवेशेति चतुर्थकम् । अधः स्विदासीत्पञ्चमं चोपरि सिदासीत् पष्ठकम् । सप्तमं तु क्लिवे स्मारः अष्टमं ङाति० एतद्युग्मं नास्ति च० ॥

पञ्चमं तु विवेशाधः-स्विदासीदितिषष्ठकम् ।
सप्तमन्तूपरिस्विदा ह्यष्टमं नैव विद्यते ॥ २२ ॥

ॐ कारस्त्विति । ॐ कारः प्रणवः । प्लुतः त्रिमात्रिकः । तु निर्धारणे । ज्ञेयः । तेन 'ॐ ३ स्प्रतिष्ठ' ( शु० य० सं० २।१३ ) ॐ ३ क्रतोस्मर ( शु० य० सं० ४०।१५ ) ॐ ३ खम्ब्रह्म ( शु० य० सं० ४०।१७ ) इति स्थलत्रयोक्तो गृह्यते । अग्ना ३ इ ( शु० य० सं० ८।१० ) लाजी३न् ( शु० य० सं० २३।८ ) छाची३न् ( शु० य० सं० २३।८ ) विवेशा३ ( शु० य० सं० २३।४६ ) अधः स्विदासी३त् ( शु० य० सं० ३३।७४ ) उपरिस्विदासी३त् ( शु० य० सं० ३३।७४ ) एतानि पदषट्कानि तथैकमोंकारपदं मिलित्वा सप्तैव पदानि प्लुतयुतानि संहितायां विद्यन्ते । अष्टमम् । हि निश्चयेन । एतेभ्योऽतिरिक्तमन्यत् प्लुतयुतं पदं नैव विद्यते । यदा तु लाजीञ्छाचीनिति तृतीयत्वेन परिगणय्य सप्तमं तु "क्रतोस्मर-" क्वचिच्च "क्लिबे स्मरेति पाठोपलब्धिः । तदा तु महानेव विरोध आपतितो भवेत् । यतः । प्रातिशाख्ये क्रतो स्मर । क्लिबे स्मर ( शु० य० सं० ४०।१५ ) इत्युभयत्रापि प्लुताऽनुपलम्भः । लाजीन्, शाचीन्, इतिपार्थक्येन दर्शनं च विद्यते--सम्प्रदायोऽपि प्रातिशाख्योक्तितुल्यः । यत्तु । "क्रतो स्मर" पदेन ॐ ३ क्रतो स्मरे ( शु० य० सं० ४०।१५ ) तिवाक्यस्थोंकारं गृहीत्वा समाहितम् । तदपि तुच्छम् । तत्रत्यस्याप्योङ्कारग्रहणेन गतार्थत्वात् । अन्यथा । ॐ खंब्रह्मे ( शु० य० सं० ४०'१७ ) त्यत्रत्योङ्कारस्यापि परिगणनापत्तेः । अष्टमं नैव विद्यते इति स्ववचो विरोधापत्तेश्च । सम्प्रति तु ओङ्कारत्वेन त्रयाणामपि ग्रहणम् । अष्टमस्यनिषेधेन च न काप्यनुपपत्तिः । तथाहि-कात्यायनेनापि "सर्वमग्नाई ( शु० य० प्रा० ४।५०-५४ ) त्यादिना प्लुतसप्तकमेव गणितम् ।

एवमुक्तातिरिक्तपदेषु प्लुतत्वं प्रतिषिध्य लृकारे दीर्घतां च वारयति-

लृकारस्य तु दीर्घत्वं नास्ति वाजसनेयिनः ॥

लृकारस्येति । वाजसनेयिनः वाजस्यान्नस्य सनिर्दानं यस्य स वाजसनिस्तदपत्यं वाजसनेयो याज्ञवल्क्यः सोऽस्यास्ति इति

१ एतदर्धं नास्ति क, ख, घ० ॥

तस्य सम्बन्धिनो लृवर्णस्य । दीर्घत्वम् । तु अपि । न नहि । अस्ति भवति ॥ २१ ॥ २२ ॥

अथ व्यञ्जनसन्धौ ( द्वित्वे—संयोगे च ) उदात्तादिं स्वरं विदधानः संयुक्तेषु वर्णेषु कस्मिन् संयुक्तावयवादरे उदात्तादिप्रयुक्तं हस्तचालनमिति शङ्कते-

**नैतत् स्वरितं[1]पूर्वाङ्गे नापराङ्गे कथञ्चन ॥**
**न स्वरे न च मात्रायां कं[2]थं स्वारो विधीयते ॥२३॥**

नैतदिति । अनेकव्यञ्जनसंयोगे । स्वरितस्य । स्वर उदात्तादिः अस्य संजात इति "तारका ( पा० ५।२।३६ ) दित्वादितच् तस्य । उदात्तादिस्वरविशिष्टस्य वर्णस्येत्यर्थः । पूर्वाङ्गे वर्णे । एतत् स्वरणम् । उदात्तादिप्रयुक्तं हस्तचालनादि इति यावत् । न । भवतीति शेषः सर्वत्र । कथञ्चन पराङ्गेऽपि । ना नहि । स्वरे अचि । न । मात्रायाम् देवम्बर्हिरित्यादौ विहितायां स्वरभक्तिनाम्न्याम् । न । (तर्हि) कथम् स्वर एव स्वार उदात्तादिः । विधीयते कर्तव्यः । इति प्रश्नः ॥ २३ ॥

अत्रोत्तरति—

**पराङ्गस्य तु* यत्पूर्वम् पूर्वाङ्गस्य तु यत्परम् ॥**
**उभयोरर्द्धसंयोगे स्वारङ्कुर्याद्विचक्षणः ॥ २४ ॥**

पराङ्गस्य संयोगादि[1]-यम[2]-क्रम[3]ज-क्रमजोत्तराऽवसितान्यतम—भिन्न-संयोगाऽवयववर्णस्य । तु । यत् । पूर्वम् अर्धम् । अस्तीति शेषः

---

१ स्वरन्ति च० । स्वरिति ज० ॥ २ कुत्र च० ॥

* च च० ॥

१ 'संयोगादिः पूर्वस्य, ( शु० य० प्रा० १।१०२ ) इति । यथा-अश्श्व' + ( शु० य० सं० २४।१ ) इत्यत्र द्वौ शकारौ वकारश्च संयोगः । तत्र प्रथमः शकारः 'स्वरादित्या ( शु० य० प्रा० ४।१०० ) दिविहितद्विरुक्तिजः पूर्वस्योदात्तस्याकारस्याङ्गं बोध्यते पारिशेष्यादुत्तरशकारवकारौ परस्य स्वरितस्याऽकारस्याङ्गम् । तेनाऽत्र पूर्वशकारार्धे उच्चारिते स्वरितनिमित्तकं हस्तचालनं । फलितम् । एवमन्यत्राप्यूह्यम् ॥

२ 'यमश्च, ( शु० य० प्रा० १।१०३ ) इति । यथा—रुक्क्मः । ( शु० य० सं० १२।१ ) इत्यत्र ककार-यम-मकाराः संयोगः । तत्राऽनेन सूत्रेण द्विरुक्तिजादुत्तरस्य 'अन्तः पदेऽपञ्चमः ( शु० य० प्रा० ४।१६१ ) इत्यादिना यमत्वे कृते यो द्वितीयो

उत्तरत्रापि तथा । पूर्वाङ्गस्य संयोगाद्यवसितान्ताऽन्यतमस्य संयोगा- वयववर्णस्य । तु । यत् । परम् अर्धम् । उभयोः पराङ्गपूर्वाङ्गयोः । अर्धसंयोगे पूर्वार्धपरार्धयोगे । विचक्षणः स्वरचालने निपुणः । स्वारमु- दात्तादिम् । कुर्यात् प्रयुञ्जीत ॥ २४ ॥

प्रकारान्तरेणपूर्वोक्तमर्थंद्रढयति—

**संयोगे तु परं स्वार्यं परं संयोगनायकम् ।**
**संयुक्तस्य तु वर्णस्य न स्वार्यं पूर्वमक्षरम् ॥ २५ ॥**

**संयोगेत्विति** । व्यञ्जनानां संयोगे तु । परम् पराङ्गंव्यञ्जनम् । स्वार्यम् स्वरसहितं कुर्यात् । कुतः । परम् पराङ्गं व्यञ्जनम् ।

---

यमसंज्ञकः ककारः । सः । चात्र पूर्वः ककारश्च । पूर्वस्याऽनुदात्तस्योकारस्याङ्गम् । मकारः परस्याऽकारस्याङ्गम् परिशेषात् । तेनात्र रेफादियमान्तंनीचैः स्थाप्य मकारे ऽर्धोंबारिते उदात्तप्रयुक्तो हस्तः चालनीय इति फलितम् ।

३ "क्रमजश्च" ( शु० य० प्रा० १।१०४ ) इति । यथा-पाश्श्व्यम् । ( शु० य० सं० ३६।६ ) इत्यत्र रेफो, द्वौ शकारौ वकारो यकारश्चसंयोगः । तत्र रेफः संयोगादिः, "परं तु रेफे ( शु० य० प्रा० ४।१०१ ) त्यादिना 'क्रमजश्च पूर्वः शकारः पूर्वस्याऽऽकारस्याङ्गम् । द्वितीयः शकारो वकारयकारौ च परस्याऽकारस्याङ्गम् ।,

४ 'तस्माच्चोत्तरꣳस्पर्शे, ( शु० य० प्रा० १।१०५ ) इति । यथा-पार्ष्ण्यर्या ( शु० य० सं० २५।४० ) इत्यत्र रेफ-षकारौ, द्वौ णकारौ, यकारश्चसंयोगः । तत्र रेफः संयोगादिः, षकारश्च क्रमजः, "ऊष्माऽन्तस्थे ( शु० य० प्रा० ४।१०२ ) त्यादिना द्विर्भूतः पूर्वो णकारः क्रमजोत्तरश्च पूर्वस्याऽऽकारस्याङ्गम् । द्वितीयणकारो यकारश्च परिशेषात् परस्याङ्गम् । शु० य० प्रा० १।१०४ सूत्रे "क्रमाज्जातं क्रमजम् । यत्संयोगादेः परस्य वर्णस्य द्विरुक्तया जायते तत् क्रमजमित्युच्यते" इत्यु- व्वटाचार्यव्याख्यानेक्रमजमिति संयोगादेः परोवर्णः लक्ष्यते । अतएव उत्तरसूत्रे "यथा- पार्ष्ण्यर्या, रेफषकारौ, द्वौ णकारौ यकारश्च संयोगः । तत्र रेफः "संयोगादिरिति कृत्वा, षकारः क्रमजमितिकृत्वेत्यादिना-द्विरुक्तिं विना वर्तमानस्य षकारस्य क्रमजत्वेन व्याख्यानं संगच्छते ॥

५ "अवसितंच, ( शु० य० प्रा० १।१०६ ) इति । यथा-वाक् ( शु० य० प० १८।२ ) इत्यत्र ककारोऽनेन पूर्वाऽऽकारस्याङ्गम् । पूर्वाङ्गपराङ्गचिन्ताप्रयोजनं चाह-'व्यञ्जनꣳस्वरेण सस्वरम्, ( शु० य० प्रा० १।१०७ ) इति व्यञ्जनं यत्र यस्य स्वरस्य अङ्गम् तत्र तेनैव स्वरेण समानस्वरं भवति । अयमपि वक्ष्यति—"स्वर उच्चः ( या० शि० व० प्र० २६ ) इत्यादिना ॥ एवम् उत्तराङ्गव्यञ्जनयुतस्वरे हस्तचालनादितु पराङ्गव्यञ्जनपूर्वार्धे उच्चार्यमाणे कर्त्तव्यमिति निष्कर्षः ॥

संयोगेषु नायकम् मुख्यम् भवति । पदयोर्विच्छेदे तेनैव व्यञ्जनेन उत्तरपदस्याऽऽरम्भणीयत्वात् । अतः । संयुक्तस्य वर्णस्य तु । पूर्वम् पूर्वाङ्गम् । अक्षरम् व्यञ्जनम् । उत्तरस्वरेण । न स्वार्यम् । तस्य पूर्वाङ्ग-व्यञ्जनस्य पूर्वस्वरेण सह विरतत्वात् । पूर्वोक्तान्युदाहरणानि ॥२५॥

पूर्वाङ्गस्याऽपिव्यञ्जनस्य स्वरेण सन्धौ तस्यैवाङ्गतामाह-

**अवग्रहे पदच्छेद उदात्तो दृश्यते यदि ।**
**स्वरान्तं स्वरितं प्राहुः सन्धौ तु स्वार्यते परम् ॥ २६ ॥**

**अवग्रह इति ।** अवग्रहे समासादिविशिष्टपदानां पदपाठकाले पदप्रकृति प्रदर्शनार्थं विछेदे इत्यर्थः। पदच्छेदे संहितापाठस्य पदपाठकाले पदानां छेदे च । यदि । उदात्तस्वरो दृश्यते । स्वरिते परे इति शेषः । तदा। स्वरस्य उदात्तस्वरस्य। अन्तम् अन्ते स्थितं व्यञ्जनमिति यावत् । संहिताकाले। स्वरितम् स्वरितस्वरेण स्वरयितव्यं प्राहुः । अत्रोदात्त-स्वरितग्रहणं स्वरमात्रस्योपलक्षणम् । यतः । सन्धौ व्यञ्जनस्य परेण-स्वरेण संहितायाम् तु पुनः। पूर्वाङ्गव्यञ्जनेऽपि परम्। स्वार्यते। न पूर्वम्। पदच्छेदेऽवसानगतस्य व्यञ्जनस्य पूर्वाङ्गत्वेन पूर्वस्वरस्योदात्तस्य प्राप्तौ सन्धौ जाते पुनः परस्याङ्गताऽनेन निर्धार्यते इति भावः । अवग्रहे यथा-"समिद्धऽइतिसम् । इद्धः" ( शु० य० प० २६।१ ) इत्यत्र समित्युदात्तस्य अन्तं मकारं स्वरितेनेकारेण सन्धितं समिद्ध इत्यत्र-स्वरितमेव स्वार्यम् । न उदात्तम् । पदच्छेदे यथा-"उत् । एनम्" (शु० य० प० १७।५० ) इति । संधौ "उदेनम्" (शु० य० प० १७।५० ) इति । एवमन्यत्राप्यूह्यम् ॥ २६ ॥

ननु नीचोच्चत्वादि विधिः अच्येव दृश्यते तर्हि व्यञ्जने परं कथं स्वार्यमित्यत आह—

**स्वरसन्धिविधानेन नीचोच्चत्वं विधीयते ॥**
**व्यञ्जनाद्वा स्वराद्वापि तत्सन्धौ स्वर उच्यते ॥२७॥**

**स्वरसन्धीति ।** स्वरसन्धिविधानेन व्यञ्जनाद्वा स्वराद्वापि-परेषाम् अक्षराणाम् । नीचोच्चत्वं विधीयते । तत् तस्मात् । सन्धौ

१ हप ज्ञाति० । इदं पद्यद्वयम् अत्र नास्ति ज्ञाति० ।

व्यञ्जनानां स्वरैः संहितायाम् । अपि । स्वर उच्यते तथाहि—"प्रागुवर्णादक्षराणामेकीभाव" ( शु० य० प्रा० ४।१३० ) इत्यधिकृत्य अक्षराणामेकीभावत्वमुक्त्वा स्वराणाम् "उदात्ताच्चे ( शु० य० प्रा० ४।१३५ ) त्यादिना व्यञ्जनव्यवहितानामपि स्वरसन्धिरुक्तः प्रातिशाख्ये । तेन "सव्यञ्जनः सानुस्वारः शुद्धो वापि स्वरोऽक्षरम्" इति सव्यञ्जने स्वरे सन्धिस्वरस्य दर्शनात् व्यञ्जनेऽपि स्वरणं फलितम् ॥ २७ ॥

उदात्तादनुदात्तेतु वामाया भ्रुव आरभेत् ।
स्वरिते चानुदात्तं च क्रमादद्दक्षिणतो न्यसेत् ॥
स्वरितादुत्तरे येऽत्र प्रचयाँस्तान्प्रचक्षते ।
एकस्वरानापि च तानाहुस्तत्त्वार्थचिन्तकाः ॥
प्रचया यत्र दृश्यन्ते तत्र हन्यात् स्वरं बुधः ।
स्वरितः केवलो यत्र मृदुं तत्र निपातयेत् ॥

व्याख्यातमेतत् पद्यत्रयम् ( या० शि० स्व० प्र० ५७. ५९-६१ ) हस्तचालनाधिकारे ॥

अथ व्यञ्जनानां स्वराङ्गतां दर्शयति—

दुर्बलस्य यथा राष्ट्रं हरते बलवान् नृपः ।
एवं व्यञ्जनमासाद्य अकारो हरति[1] स्वरम् ॥२८॥

दुर्बलस्येति । नृपो यथा दुर्बलस्य राज्ञो राष्ट्रं हरते । एवम् । अकारो व्यञ्जनमासाद्य स्वरं प्रति हरते ॥ अकार इत्यनुपलक्षणम् । तेन व्यञ्जनं स्वाङ्गिस्वरेणैव समानस्वरमितिभावः ॥ २८ ॥

उक्तार्थं विशदयति—

स्वर उच्चः स्वरो नीचः स्वरः स्वरित एव च ।
स्वरप्रधानं त्रैस्वर्यं व्यञ्जनं तेन सस्वरम् ॥ २९ ॥

---

१ ते क, ख, ग, घ० ॥ २ अत्र ३१-३३ पठित्वा 'मात्रिकंवेति, उच्चस्थानगत इति, उच्चादुच्चतरमिति'' ( या० शि० स्व० प्र० १।६२।५८-५६ ) च प्रपठ्य स्वर उच्च इति पठितम् ग० । च० तु ३१मां त्यक्त्वाऽन्यत्र गपुस्तकसमम् ।

स्वर उच्च इति । स्वरोऽकारादिः । उच्चः उदात्तः । स्वरोऽकारादिरेव । नीचः अनुदात्तः । स्वरोऽकारादिरेव च । स्वरितः । भवतीति शेषः । अतः । त्रैस्वर्यम् उदात्तादित्रयम् । स्वरो ऽकारादिः प्रधानं मुख्यतया नीचोच्चादिविधौ उद्दिष्टं यत्र तत्स्वरप्रधानम् । ज्ञेयम् । इति तेन अकारादिस्वरेण व्यञ्जन मपि । सस्वरम् समानोदात्तादि । बोध्यम् इति शेषः ॥

तदेव स्पष्टयति—

माणिवव्द्यञ्जनान्याहुः सूत्रवत्स्वर इष्यते ।
व्यञ्जनान्यनुवर्त्तन्ते यत्र तिष्ठति सस्वरः ॥ ३० ॥

यथा मालायां मणयः सूत्राधीना भवन्ति । सूत्रं तु प्रधानतया मण्याधारत्वेन तिष्ठति । तथैव व्यञ्जनान्यपि स्वराधीनानि ज्ञेयानीत्याह-माणिवदिति । व्यञ्जनानि मणिवदाहुः । स्वरः सूत्रवत् इष्यते । एवं दृष्टान्तेन संगमय्य निष्कृष्टार्थमुत्तरार्धेन व्यनक्ति यत्र । अच् । सस्वरः उदात्तादिविशिष्टः । तिष्ठति । तत्र तमचं व्यञ्जनान्यप्यनुवर्त्तन्ते । तेन स्वरेणैव व्यञ्जनान्यपि स्वरयितव्यानि इति भावः ॥ ३० ॥

[1]उदात्तं नानुवर्त्तेत नीचं न स्वरितं तथा ।
विस्वरं तं विजानीयाद् दीर्घह्रस्वविवर्जितम् ॥३१॥

यो वर्णः उदात्तम् । नीचम् अनुदात्तम् । तथा । स्वरितम् । न अनुवर्त्तेत । अवग्रहादिपदच्छेदे स्वरसन्धिराहित्यात् इति शेषः । अत एव दीर्घह्रस्वादिमात्राविवर्जितं व्यञ्जनात्मकं तं वर्णं विस्वरं नीचादिस्वरहीनं विजानीयात् । अर्थात्केवलो व्यञ्जनः उदात्तादि स्वरेण न स्वरणीय इति भावः ॥ ३१ ॥

---

१ एतन्न नास्ति च० ॥

अथ व्यञ्जनविशेषविशिष्टेषु पदेषु स्वरनियमनाय उपक्रमते–

हरि-वरुण-वरेण्याश्च धारा-पुरुषौ तथा ।
विश्वानरं विहायैकं शेषा रस्वरिता नराः ॥ ३२ ॥

हरिवरुणेति । हरि–वरुण–वरेण्य–धारा–पुरुषाः इत्येते शब्दाः । तथा । विश्वानरेति पदघटितमेकं नरशब्दं विहाय शेषाः नरशब्दाश्च । रः रकारः स्वरितो येषु ते । रस्वरिताः रेफविशिष्टाक्षरे स्वरितत्वयुक्ताः । भवन्तीति शेषः । उदाहरणानि । यथा—मती योजान्विन्द्रते हरी (शु० य० सं० ३।५१) । हरिवान्ऽ इन्द्रः (शु० य० सं० २०।३६) । व्वातस्य जूतिंव्वरुणस्य (शु० य० सं० १३।४२) । तत्सवितुर्व्वरेण्यम्भ (शु० य० सं० ३।३५) । घृतस्य धाराः (शु० य० सं० १७।६३,६५,६६,६७) पुरुषऽएवेदं (शु० य० सं० ३१।२)-त्येवमादिषु रेफविशिष्टाक्षरस्य स्वरितत्वम् । तथा—व्विश्श्वानराय व्विश्श्वाभुवे (शु० य० सं० ३३ २३) । इत्यत्र विश्वानरशब्दघटितनरशब्दे रेफविशिष्टाक्षरस्य स्वरितत्वम् न । अन्यत्र नरशब्देषु 'व्विश्श्वेन्नरः' (शु० य० सं० २७।२३) इत्येवमादिषु तु रेफविशिष्टाक्षरस्यैव स्वरितत्वम् इति नियमः ॥ ३२ ॥

---

१ हरि·· ण्येषु धारा···देषु च । वि···रो नकारेषु शेषा घ० । धारा हि पुरुषेषु च । वैश्वानरो नकारे च शेषास्तु स्व ख, ग० । ह···ण्येषु धारपु···देषु च । स्वरिते रेफ वैश्वानरो नकारः शेषाकारः स्वरिता नकाराः । क० । ह० ण्येप्सु धा० षेषु च । स्वरन्ति रेफम् ॥ वैश्वानरो नकारे च शेषास्तु स्व च० । ह··········· । स्वरितं रेफा विश्वानरे कारे तु शे ज० । नारदीयायां चैतत्–"अयमग्निः सुतो मित्रमिदं वय मयावहाः । प्रियं दूतं घृतं चित्त-मभिशब्दश्च नीचतः ॥ १ ॥ अर्केष्वेव सुतेष्वेव यज्ञेषु कलशेषु च । शतेषु सपवित्रेषु नीचादुच्चार्यते श्रुतिः ॥ २ ॥ इति द्वयमधिकं प्रपठ्य पठ्यते—"हरि·· ण्येषु पुरुषेषु स्वरति रेफः । वि...रो नकारेषु शेषा...।.' (ना० शि० २।३।२-४) इति ॥

२ यद्यपि (शु० य० सं० १७।९८) घृतस्य धारा मधुमदित्यत्रत्य-धाराशब्दे स्वरितत्वं न दृश्यते । तथापि पदपाठेऽयं स्वरितान्तः, न स्वरितादिः इत्याचार्यपादानामाशयः ।

क्वचन वरुण-धाराशब्दयोः रेफविशिष्टाक्षरे स्वरितविशिष्टत्वनियम-मपवदति—

**द्वौ वरुणौ वस्वरितौ "उदुंत्तमँ त्वँ-व्वंरुणौ" ।**
**धाकारे चोरुधारायां तथा धारे च दोहने ॥३३॥**

**द्वौ वरुणाविति ।** त्वँव्वंरुण ( शु० य० सं० ३३।३२ ) उदुंत्तमँ-व्वंरुण( शु० य०सं० १२।१२ ) इति द्वौ वरुणौ । वकारः स्वरितो ययोः तौ वस्वरितौ वकारविशिष्टाक्षरे स्वरितत्वयुक्तौ ज्ञेयौ ॥ च पुनः। "धुक्वो रुधांरा पयंस्वती" ( शु० य० सं० ८।४२ ) इत्यत्र उरुधारा-शब्दे । तथा-धांरया मा नमोंभिः ( शु० य० सं० १७।६० ) इत्यादौ धारशब्दे । च पुनः । दोहने दोहनात्मककर्मणि विनियुक्त-मन्त्रघटिते शतधारशब्दे । व्वसोंःपवित्रंमसि शतधांरँ व्वसोंः पवित्रंमसि सहस्रंधारम् । देवस्त्वां सविता पुंनातु व्वसोंःपवित्रेंण शतधांरेण सुप्प्वा कामंधुक्षः ( शु० य० सं० १।३ ) इत्यत्र शत-धारशब्दे । धारशब्देनैव शतधारे सिद्धे पुनः दोहने इति विशिष्यो-पादानम् अत्रैव स्यात् सहस्रधारे मा भूत् इति नियमार्थम् । धाकारे । एव स्वरितत्वम् । स्वरितप्रकरणाच्च स्वरितत्वलाभः । न तु रेफविशिष्टाक्षरे स्वरितत्वं बोध्यम्-इति भावः ॥ ३३ ॥

---

१ नारदीयायां तु—"द्वौ व ··वरुणौ । धा···रायामुरुधारेव दोहने ॥ इति पाठः । उरुधारामरंकृतम् । उरुधारेव दोहने । इति धाकारे स्वरितत्वम् । इत्थं शुभाकरेण व्याख्यातश्च । द्वौ वरुणौ च स्व··· । उ···मं वरुणधारये वरेरुधारा च होइते क० । द्वौ·· णौ च स्व·· ण । धारे चैत्रोरुधारे तु पुरुधारे च दो ख, ग० । वरुणौ स्वरितौ द्वौ च त्वंव्वरुणोदुत्तमंच । धारे चैत्रोरुधारे तु पुरुधा घ० । द्वौ·· णौ स्वरन्ति उ··· णौ । धारे चैत्रोरुधारे च पुरुधा च० ॥

(क) मात्रिकं वा द्विमात्रं वा स्वार्यते यदिहाक्षरम् ।
तस्यादितोऽर्द्धमात्रास्यात्-छेषं तु परतो भवेत् ॥
(ख) उच्चस्थानगते ह्रस्ते स्वरितं नोपपद्यते ।
अधस्तात्तु यदा गच्छेत् स्वरितं नापि तद्भवेत् ॥
(ग) उच्चादुच्चतरं नास्ति नीचान्नीचतरं तथा ।
अक्षराणि च तुल्यानि प्रचितान्युच्चगानि च ॥
(घ) स्वर उच्चः स्वरो नीचः स्वरः स्वरित एव च ।
स्वरप्रधानं त्रैस्वर्यं व्यञ्जनं तेन सस्वरम् ॥
(ङ) मणिवद्व्यञ्जनान्याहुः सूत्रवत्स्वरतोऽभ्यसेत् ।
व्यञ्जनान्यनुवर्त्तन्ते यत्र तिष्ठति सस्वरः ॥
(च) आचार्याः सममिच्छन्ति पदच्छेदन्तु पण्डिताः ।
स्त्रियो मधुरमिच्छन्ति विक्रुष्टमितरे जनाः ॥
(छ) उदात्तं नानुवर्त्तेत नीचं न स्वरितं तथा ।
विस्वरं तं विजानीयाद् दीर्घह्रस्वविवर्जितम् ॥

कादिछान्तानि पद्यानि व्याख्यातानि तत्तदधिकारे द्रष्टव्यानि । तद्यथा—या० शि० स्व० प्र० ६१-६२ (क-ख) इति । ५८-५६ (ग) इति । या० शि० व० प्र० २६-३१ (घ-ङ, छ) इति । तत्र (च) इति तु प्रकीर्णकाऽधिकारे व्याख्यास्यते ॥

अथ अनेकव्यञ्जनसन्धौ एकमुच्चार्याऽपरस्योऽच्चारणे मध्ये स्वभावतः प्राप्तं स्थानकरणविमोकं (प्रयत्नभेदं) समानवर्णसंहितायां वारयति—

---

१ एते संख्याङ्करहिताः श्लोकाः सर्वत्र पुस्तकेषु अस्मिन् स्थलेऽनुपलभमानाः विद्यन्ते अतः प्रकरणानुरोधेन व्याख्याता द्रष्टव्याः ॥

**प्रथमा यत्र दृश्यन्ते सन्धिस्थानेषु पूर्वतः[1] ।**
**स्ववर्गीयेण संयुक्ता मोक्षं[2] तत्र[3] न कारयेत् ॥ ३४ ॥**

प्रथमा इति ।—यत्र । सन्धिस्थानेषु द्विरुक्त्यादिसंहितासु । स्ववर्गीयेण क्रमजादि-समान-स्थानकरणेन स्पर्शेन । संयुक्ताः । प्रथमाः कचटतपाः । पूर्वतः । पूर्वस्वराङ्गीभूताः । दृश्यन्त उपलभ्यन्ते । तत्र समानस्पर्शयोर्मध्ये । मोक्षम् स्थानकरणविमोकम् । न नहि । कारयेत् कुर्वीत । स्वार्थे णिच् । संहिता पाठ इति शेषः । अर्थात्—स्थानकरणसंयोगरूपेण एकेन प्रयत्नेन मुखसंधारणाविशेषात् पूर्वं स्पर्शम् स्थानकरणविच्छेदम् अकृत्वैव उच्चार्य, द्वितीयं पूर्वसजातीय-वर्णम् स्थानकरणविच्छेदेन उच्चारणीयम् । क्रमेणोदाहरणानि यथा—"सम्म्यक्स्त्रवन्ति" ( शु० य० सं० १३।३८ ) । "आच्च्या" ( शु० य० सं० १९।६२ ) । "त्वट्टूर्ध्व" ( शु० य० सं० ३३।४० ) । "तरस्तूर्ध्वस्य" ( शु० य० सं० ३३।३७ ) । "अनुष्टुप्पूशारदी" ( शु० य० सं० १३।५७ ) इति ॥ एषु सर्वत्र पूर्वाङ्गी-भूत-सवर्ण-स्पर्शयोर्मध्ये स्थानकरणविच्छेदाऽभावविधानेन संयोगादिस्पर्शस्य

---

१ कचटतपा दृश्य ख० । अस्याग्रे "तकारान्ते पदे पूर्वे सकारे परतः स्थिते । प्रत्यारम्भं न कुर्वीत पपाविति निदर्शनम्" इत्यधिकं च दृश्यते क ख० । ग० तु अस्याग्रे 'नकारान्ते पदे पूर्वे स्वश्रुतिः परतः स्थिते । तकारं न प्रयुञ्जीत अत्र सन्धिः समुद्धरेत्' इत्यधिकं पठितम् ॥

२ नित्यशः घ० ॥

३ कुर्वीत तत्र वै ग, च, ज० । यदि एष पाठः स्वीक्रियेत तदा एवं व्याख्येयम्—तत्र सन्धिस्थानेषु । वै निश्चयेन । मोक्षम् स्थानकरणविमोकम् । कुर्वीत—अर्थात् समानौ द्वौ वर्णौ उच्चार्यैव विमोको भवति विजातीयव्यञ्जनयोगस्याऽग्रे विद्यमानत्वात् न तु समानस्पर्शयोर्मध्ये । तथाहि—"असंयुक्तं शाकलम् ( ऋ० प्रा० ६।२४ ) । इति प्रक्रम्य "सर्वत्रैके स्थानकरणभेदे वा शाकलम् ।" ( ऋ० प्रा० ६।२७ ) इत्याद्युक्तम् । उक्तान्येवोदाहरणानि । कथं तान्येवोभयत्रोदाह्रियन्ते मोक्षे चामोक्षे च । द्वयोः समानस्पर्शयोरुत्तरस्मिन् मोक्षः । पूर्वस्मिन्नमोक्षः । तस्मादुभयत्र तान्येवोदाह्रियन्ते । अन्यत् पूर्ववत् ।

श्रुतिर्निषिध्यते । तथाहि – स्ववर्गीयैस्तु संयोगः स्पर्शानां संभवति । तत्पूर्वस्य श्रुतिर्नास्ति ( व० र० प्र० शि० १८७ ) इति ॥ ३४ ॥

एवं सामान्यतः प्राप्तं प्रतिषिद्ध्य " स्पर्शान्तस्य स्थानकरण-विमोक्षः " ( शु० य० प्रा० १।६० ) इति प्राप्तं पदान्तविमोक्षं व्यवस्थापयति –

**तकारान्ते पदे पूर्वे चवर्गे परतः स्थिते ।**
**मोक्षं तत्र[1] न कुर्वीत "यच्च शेपे[3]"[2] निदर्शनम् ॥३५॥**

---

१ अयमभिप्रायः । " अभिनिधानं कृतसंहितानां स्पर्शान्तस्थानामन्त्याय रेफस्य ( किंपुनस्तदभिनिधानं नाम ) संधारणं ( च वर्णस्य ) संवरणं ( च वर्ण- ) श्रुतेश्च स्पर्शोदयानाम्" (ऋ०प्रा०६ १७) इत्यारभ्य पटलसमाप्त्यन्तमभिनिधानं प्रकृत्योक्तम् । तत्र " नादः परोऽभिनिधानाद् ध्रुवं तत्र तत्कालस्थानम् " ( ऋ० प्रा० ६।२६ ) इति ध्रुवाऽपरपर्यायं नादश्रुतिं विधाय " अश्रुति त्वघोषात् " ( ऋ० प्रा० ६।४० ) इत्यघोषात् अभिनिधेयवर्गात् नादश्रुतेः प्रतिषेधः विहितः । तथा च —" द्विवर्णमे-कवर्णवद् धारणात् स्वरमध्ये समानपदे " ( शु० य० प्रा० ४।१४२ ) इति समानवर्ण-द्वयं हि सकृद् वर्णवत् मुखसंधारणाविशेषात् कर्त्तव्यत्वेन उपदिश्यते । तेन एकस्या वर्णश्रुतेः संदरगं मुखसंधारणाविशेषात् स्थानकरणयोरविच्छेदेन संभवति । स्वरमध्य इति तु विजातीयव्यञ्जनयोगाऽभावस्योपलक्षणम् । अत एव अमरेशोऽपि " वर्णे द्विवर्णसंयोगे " ( व० र० प्र० शि० १८३-१८४ ) इत्यत्र " स्वरमध्ये सजातीये " इति विशेषणं दत्तवान् । तेन विजातीयव्यञ्जनयोगोदये संयोगादेरुत्तरत्र स्थानकरणयो-र्विमोक्षो भवत्येव । संयोगादेस्तु सजातीयव्यञ्जनयोगात् तत्र धारणा । न स्थानकरण-विच्छेदः । समानपद इति संहितोपलक्षणम् । अत एव ( या० शि० व० प० ३४ ) वक्ष्यमाणनिदर्शने " यच्चेत्यत्रापि संयोगादेः अश्रुतित्वमभिधास्यति ॥

२ तत्राऽपि ग, च, ज० । अत्रापि यदि एष एव पाठः स्वीक्रियेत तदा एवं व्याख्ये-यम् । तत्र पदद्वयनिष्ठ-समानवर्णद्वयसंहितायाम् । अपि च । समानौ द्वौ वर्णौ इत्यर्थेन इत्यर्थः । मोक्षम् स्थानकरणविच्छेदम् । कुर्वीत कुर्यात् । न तु समानाक्षरयोर्मध्ये । तथा हि—" वर्णे द्विवर्णसंयोगे एकवर्णवदुच्यते । स्वरमध्ये सजातीये, विजातीये द्वयोः श्रुतिः । कुक्कुटोसि ( शु० य० सं० १।१६ तथा " तन्नऽ ( शु० य० सं० ३३।४२ ) आज्ज्यं ( शु० य० सं० २।८ ) भुज्ज्युः ( शु० य० सं० १८।४२ ) श्रुतिर्द्वयोः ( विजातीययोः ) " ( व० र० प्र० शि० १८३-१८४ ) इति ॥ अन्यत्र पूर्ववत् ।

३ पपो ( शु० य० सं० २५।३७ ) क, च० ॥

तकारान्त इति।—तकारान्ते पदे पूर्वे सति। परतः चवर्गे स्थिते सति। तत्र सन्धिस्थानेषु। मोक्षम् स्थानकरणविच्छेदम्। न नहि। कुर्वीत कुर्यात्। "यच्च शेपे" (शु० य० सं० ६।१७) इति एतत्। निदर्शनम् उपलक्षणम्। ज्ञेयमिति शेषः। तेन पदद्वयनिष्ठस्यापि समानवर्णद्वयस्य संहितायाम् संयोगादिवर्णे न स्थानकरणविमोक्षः। यथा। "युङ्क्ष्सि" (शु० य० सं० १०।२५)। "तद्देवानाम्"। (शु० य० सं० ३३।१७) इत्यादि। तथाहि "द्विवर्णमेकवर्णवद् धारणात् स्वरमध्ये समानपदे" (शु० य० प्रा० ४।१४२) इत्यत्राहुः उव्वटाचार्याः—समानपदग्रहणेन च संहिता लक्ष्यते। पदविच्छेदे (धारणा) न भवति। यथा—"इमम्। मे" (शु० य० प० २१।१) इति। किंच। "स्पर्शान्तस्ये (शु० य० प्रा० १।६०) ति भाष्येऽपि-अन्येन प्रयत्नेन अन्यत् पदमारब्धव्यम्। अन्यथा (संहितापाठे इत्यर्थः) पदादेर्द्वित्वं भवति। तद्यथा। "तत्। नः (शु० य० प० ३३।३८)। तन्नो मित्रो वरुणः" (शु० य० सं० ३३।४२)। इति। तथाहि—"व्यञ्जनान्तस्य मोक्षः स्यात् करणस्थानतः पदे। अन्यदन्यप्रयत्नेन पदमारभ्यते बुधैः॥ अन्यथा तु पदादौ च द्वित्वमापद्यते ध्रुवम्। सँव्वपामि (शु० य० सं० १।२२) सँव्वपामी (शु० य० सं० १।२१) ति इमस्म (शु० य० सं० २१।१) इति दर्शनम्।) (व० र० प्र० शि० १६२-१६३) इति। स्थानकरण-विमोकाऽभावात्मकं धारणाप्रकारं चाग्रे वक्ष्यति "कुक्कुटः कामलुब्ध (या० शि० व० प्र० ६४) इत्यादिना॥ ३५॥

संप्रति केषांचिन्मते शरि प्रथमाः स्वद्वितीयत्वं प्राप्नुवन्ति तत् प्रकृतिदर्शनेन वारयति—

ककारान्ते पदे पूर्वे सकारे परतः स्थिते।
खसवर्णं विजानीयात "भिषक्क्सीसे" निदर्शनम्॥३६॥

---

१ भिषख्सीसे च० अयमपपाठः उत्तरत्र निदर्शनेषु द्वितीयाऽनिर्देशात्। माध्यन्दिनीयशिक्षायां कवर्गीय-खकारपरिगणनेऽस्याऽभावाच्च। एतत्पद्यं नास्ति ज०॥

टकारान्ते पदे पूर्वे सकारे परतः स्थिते ।
ठ सवर्णं विजानीयात् "सम्राट्सम्भृत" दर्शनम् ॥३७॥
( पकारान्ते पदे पूर्वे सकारे परतः स्थिते ।
फसवर्णं विजानीया दप्स्वग्न इति दर्शनम् ॥ )
पकारान्ते पदे पूर्वे शकारे परतः स्थिते ।
फ सवर्णं विजानीया दनुष्टुप्शारदीति च ॥ ३८ ॥

ककारान्ते पद इत्यादि । भिषक्सीसे ( शु० य० सं० २१।३६ ) । सम्राट्सम्भृतो ( शु० य० सं० ३८।५ )। अनुष्टुप् शारदी ( शु० य० क० १३।५७ ) एतादृशेषु "असस्थाने मुदि द्वितीयर्ठ शौनकस्य ( शु० य० प्रा० ४।१२० ) इति प्रातिशाख्यात् शौनकमते द्वितीयाः ख–ठ–फाः क्रमेण भवन्तीत्याह-खलवर्णंत्यादि । तत्र स्वमतप्रदर्शनार्थम् "भिषक्सीसे" इत्यादिप्रकृत्या निदर्शनेन माध्यन्दिनानां द्वितीया न भवन्तीति ज्ञापितम् अतस्तैः प्रकृत्यैव पठ्यन्ते न द्वितीयापत्तिं कृत्वा " अप्स्वग्ने ( शु० य० सं० १२।३६ ) इत्युदाहरणघटितं पद्यं तु " अनुष्टुप्शारदीतिवत् व्याख्येयम् । न कश्चिद् विशेषः । क्वचित्पुस्तकेषु अस्य पाठ एव नास्ति ॥ ३६–३७–३८ ॥

ननु शौनकमतं तु निदर्शनविज्ञापनेन निरस्तम् । अथ सस्थानेऽपि मुदि आपस्तम्बमतेन या द्वितीयापत्तिः सापि निरस्यते ।

तकारान्ते पदे पूर्वे सकारे परतः स्थिते ।
थसवर्णं विजानीयात् "तत्सवितुर्न्निदर्शनम्" ॥३९॥
नैतन्माध्यन्दिनीयानां सस्थानत्वात्तयोर्द्वयोः ।
सस्थानेऽपि द्वितीयं स्या-दापस्तम्बस्य यन्मतम्॥४०॥

१ तथ्सवितु च० । अयमप्यपपाठः । एतद्द्वयं पद्यं ३६-३७मयोरन्तरे च पठितम् च० ॥ २ नास्ति क, घ, ज० ॥

**तकारान्ते पदे** इत्यादि । तकारान्ते पदे पूर्वे सति सकारे च परतः स्थिते "तत्सवितु (शु० य० सं० ३।३५) रित्यादौ समानस्थानेऽपि मुदि । थसवर्णं विजानीयात् इति । यत् आपस्तम्बस्य मतम् । एतत् मतम् । माध्यन्दिनीयानां कात्यायनादिप्रातिशाख्यकाराणाम् । तयोः तसयोः । द्वयोः उभयोः । स्थानि-निमित्तयोरिति यावत् । सस्थानत्वात् समानस्थानोत्पन्नत्वात् । न नहि । इष्यते इति शेषः ॥ "असस्थाने मुदि द्वितीयर्ठ शौनकस्येति तैरुक्तत्वात् तथाहि—पदान्ताः प्रथमा वर्णाः शषसेषु परेषु तान् । शौनको द्वितीयानिच्छेत्प्रकृत्या शाकटायनः । असमानस्थलस्थाश्चेच्छौनकोऽपि वदेत्तदा । सम्यक्त्व-वन्ति... । तत्सवितुश्च तत्सत्यं द्वितीयं नात्र कर्हिचित् ( व० र० प्र० शि० १२१-१२३ ) इति ॥ ३९ ॥ ४० ॥

(क) ङकारान्ते पदे पूर्वे सकारे परतः स्थिते ।
कसवर्णं विजानीयात्"प्राङ्क्सोम"इति दर्शनम् ।
(ख) नकारान्ते पदे पूर्वे सकारे परतः स्थिते ।
तसवर्णं विजानीयात् "त्रीन्त्समुद्रान्" निदर्शनम्

क-ख पद्ययोरर्थः ( या० शि० व० प्र० पृष्ठे ८१-८२ ) आगमो यथेत्यादिना व्याख्यातः ! अन्वयस्तु सुगम एवेति नैतदर्थं प्रयत्यते ॥

अथ "शितुक्"(पा० ८।३।३१) इति पाक्षिकं तुगाऽऽगमं वारयति—

नकारान्ते पदे पूर्वे श्मश्रुभिः परतः स्थिते ।
छकारं न प्रयुञ्जीत "ञश" सन्धिं समुच्चरेत् ॥४१॥

**नकारान्ते पद इति**—आदित्यान् श्मश्रुभिः ( शु० य० सं० २५।१ ) इत्यत्र नकारान्ते पदे पूर्वे सति परतः श्मश्रुभिरिति

---

१ इमे पद्ये यथाक्रमम् ३६-३७ मयोः, ३७-३८ मयोश्चाऽन्तरे पठिते क, ख, ग, घ० । नास्ति च, ज० ॥ २ ग० तु ३४-३५ मपद्ययोरन्तरे नकारान्ते पदे पूर्वे स्वश्रुतिरिति ( या. शि. व प्र ३४ मपद्यस्य टिप्पणीस्थं ) पद्यं पठित्वा एतत् पठितम् । ततः 'ओकारः प्लुत'''वाजसनेयिनः' या० शि० व० प्र० २१-२२॥ इति च पठितम् । घ० पुनः केवलमेतदेव तत्र ३४-३५ मयोरन्तरे दृश्यते । ज० नास्त्येतत्पद्यम् ।

पदे स्थिते सति पाणिनिमते झयः परत्वाभावात् । प्रातिशाख्यविधानेन च 'शकारे चे—( शु० य० प्रा० ४।१६ ) ति नस्य अत्वे कृते "परश्चास्पर्शपरश्च—(शु० य० प्रा० ४।१७) मिति अस्पर्शपरत्वात् छत्वाऽप्राप्तेः शकारस्य स्थाने छकारं न प्रयुञ्जीत । किन्तु नकारस्य चुत्वेन "ञ्श" सन्धिम् "आदित्याञ्शमश्रुभिरिति समुच्चरेत् ॥ ४१ ॥

अथ नश्छव्यप्रशानित्यादि नकारविकारं निषेधति—

**नकारान्ते पदे पूर्वे त्वं पदे परतः स्थिते ।**
**सकारं न प्रयुञ्जीत 'चिकित्वान्त्व' मिदं यथा ॥**

नकारान्त इति । नकारान्ते पदे पूर्वे सति त्वमिति पदे परतः स्थिते सति । यथा—चिकित्वान् त्वम् । ( शु० य० सं० २६।२५ ) इत्यत्र "नुः" ( शु० य० प्रा० ३।१३४ ) इत्यधिकृत्य तथयोः स-( शु० य० प्रा० ३।१३६ ) मिति नकारस्य सकारे । तथा 'अनुनासिकमुपधा प्रागन्तस्थायाः ( शु० य० प्रा० ३।१३१ ) इत्यधिकारेण उपधानुनासिक्ये च प्राप्ते निषेधति-सकारं न प्रयुञ्जीत । तथाहि—"न तमे । निर्ज्जगन्वान् तमसि । धामञ्छत्रूँश्चिकित्वाँस्त्वस्पूषन्नर्क्वान्निति च" ( ३।१४४-१४६ ) इति नकारस्य विकाराभावं निपात्यते । तेनात्र यथा—" चिकित्वान्त्वम् " इदम् उदाहरणम् । एवमन्यत्रापि प्रातिशाख्योक्तनकारप्रकृतिभावस्थलेऽप्यूह्यम् । प्रातिशाख्यसूत्रे सन्धिप्रदर्शनन्तु मन्त्रे एव नकारविकाराभावज्ञापनार्थम् । तेन ब्राह्मणभागादौ सन्धिर्भवत्येव चिकित्वाँस्त्वमित्यादि ।

अथ सर्वोपि विकल्पविधिः छन्दसि व्यवस्थित इति ज्ञापयति-

**मकारान्ते पदे पूर्वे सवर्णे परतः स्थिते ।**
**मसवर्णं विजानीयाद् "इमम्मं" इति दर्शनम् ॥**

---

१ पद्यमेतद् नास्ति ज० । ग० तु "मकारान्त इत्यग्रिमं प्राक्पपठयेदं पठितम् ॥

२ इमम्मेति निद क, ख, घ० । ग० ४२ त्याः पूर्वमेषा पठिता । नास्ति च० । तत्र अनुस्वारस्योपरिष्टाद्दिष्टतंव्यञ्जनात्परम् । दीर्घं तं तु विजानीयाच्छ्रोताग्रावाणगं यथा इत्यधिकः पाठो दृश्यते । श्रोताग्रावाणगम् "सोमराज—( शु० य० सं० ६।२६ )

मकारान्ते पद इति। "इमम् मे" (शु०य० सं०२१।१) इत्यत्र "मोऽनुस्वार—( पा० ८।३।२३ ) इति पाणिनीयेनानुस्वारे कृते 'वापदान्तस्येति ( पा० ८।४।५९ ) वैकल्पिकपरसवर्णविधानात्पक्षेऽनुस्वारप्रसङ्गः। सोऽत्र परसवर्णरूप-मकारविधानेन वार्यते। तेन "इमम्मे" इत्येव भवति नानुस्वारप्रयोगः। एवं छन्दसि सर्वत्र। उदाहरणस्योपलक्षणत्वात् इति भावः।

अथाऽनुस्वारभेदानाह—

**वर्णे तु मात्रिके पूर्वे ह्यनुस्वारो द्विमात्रिकः॥**

वर्णेत्विति। मात्रिके ह्रस्वे। वर्णे। पूर्वे सति। अनुस्वारः ठं ( गूँ ) कारः। द्विमात्रिकः दीर्घः। ज्ञेयः इति शेषः। मात्राद्वयं च अत्र एवम् "अनुस्वारो ह्रस्वपूर्वोऽध्यर्द्धमात्रा पूर्वा चाऽर्धमात्रा" (शु० य० प्रा० ४।१४८) इति। अस्यायमर्थः—अनुस्वारः ठं—( गूँ ) कारः। अध्यर्द्धमात्रा सार्धैकमात्राकालो भवति। यदि ह्रस्वो वर्णः पूर्वत्र भवेत्। पूर्वा चाऽर्धमात्रा पूर्वो ह्रस्वो वर्णश्च अर्धमात्राकालो भवति। तेन ह्रस्वे गुरुत्वं कृत्वा ठंकारे उच्चारिते गणपतिठं हवामहे" ( शु० य० सं० २३।१९ ) इत्यत्र "तिऽगूँ ह" इत्येवं श्रुतिर्भवति। ये च गणपतिग्वङ्घवामहे इत्येवमुच्चारयन्ति तेऽनधीतविद्याः प्रातिशाख्याद्यनभिज्ञाश्च।

---

न्निति मन्त्रस्थितम्। "यज्ञठंश्रणोतु" ( शु० य० सं० ६।२६ ) इत्यत्र व्यञ्जनात् शकारात्। परं विस्तम् ऋकारः। अनुस्वारस्य ठंकारस्य। उपरिष्टात् परतः। वर्त्तते तत्र। तम् ठंकारम्। तु पुनः। दीर्घं द्विमात्रिकम्। विजानीयात्। एतेन अत्र न किमपि वैलक्षण्यम्। वर्णेत्वि (या० शि० व० प्र०) त्यादिना गतार्थत्वात्॥

१ इदमत्राऽऽकूतम्— 'यमानुस्वारनासिक्यानां नासिके" ( शु० य० प्रा० १।७४ ) इति अनुस्वारस्य स्थानम् नासिका "जिह्वामूलीयानुस्वारा हनुमूलेन" ( शु० य० प्रा० १।८३ ) इति करणं च हनुमूलम् उक्तम्। एवंच हनुमूलेन नासिकायां वर्णे उच्चारिते गुँकारश्रुतिरेव श्रूयते। न पुनः ग्वंकारश्रुतिः। तथा च केशवीशिक्षायाम्— अनुस्वारस्य गुँकार आदेशश्छन्दसि स्मृतः। ऊष्मरेफेषु परतस्तस्य त्रैविध्यमुच्यते ( के० कृ० प० शि० १५ ) इति। एवं प्रतिज्ञासूत्रादिषु। तत्र आदेशश्च द्विमात्रिकाद्युपलक्षितवर्णविशेषोच्चारणस्वरूपएव। नच नासिकायां हनुमूलेन अनुस्वारस्य उच्चारणे कृते गुँकारश्रुतिरुपपन्ना। परन्तु गकारोत्तरमुकारसदृशो ध्वनिः कथम्प्रयुज्यत इति वाच्यम्। नासिकायां

अथ ꣳकारस्य दीर्घात्मकं भेदं प्रदर्श्य लघुभेदं दर्शयति—

## द्विमात्रिके मात्रिकः स्यात्—

द्विमात्रिक इति।—द्विमात्रिके दीर्घे वर्णे पूर्वे सति। अनुस्वारःꣳकारः। मात्रिकः ह्रस्वः। स्यात्। मात्रिकत्वमपि प्रातिशाख्योक्तमेव ग्राह्यम्। तथाहि "दीर्घादर्द्धमात्रा पूर्वा चाध्यर्द्धा" (शु० य० प्रा० ४।१४६) अस्यार्थः—दीर्घात्स्वरात्परोऽनुस्वारोगुँकारः अर्ध[1]मात्राकालो भवति। ततः पूर्वा दीर्घस्वरश्च अध्यर्द्धा=अर्धमात्रया अधिकः सार्धद्विमात्रिकः इति यावत्॥ तेन दीर्घे गुरुत्वं[2] कृत्वाऽनुस्वारे उच्चारिते "ताꣳ सवितु—(शु० य० सं० १७।७४) रित्यत्र ताऽगुँ सवितुरिति श्रुतिर्भवति॥

संयोगाद्यस्यानुस्वारस्य गुरुत्वेऽपि न द्विमात्रिकत्वम् इत्याह—

## संयोगाद्यश्चयो भवेत्॥ ४२॥

संयोगाद्य इति—यश्च संयोगाद्योऽनुस्वारः भवेत् सोऽपि चकारात् ह्रस्व एव गुरुभूतः स्यात् न द्विमात्रिकः॥ ४२॥

---

हनुमूलेनानुस्वार उच्चारिते गँ्—कारश्रुतिरर्धमात्रिका जाता। ततः समनन्तरमेव अनुस्वारस्य द्विमात्रिकत्वादिविधानात्। तथा—"ह्रस्वो दीर्घः प्लुतः इति कालतो नियमा अचि (पा० शि० ११) इति। नियमनेन अस्पृष्टस्वरस्योच्चारणे प्राप्ते हनुमूलस्य नासिकायां गमनेन तथा—"अनुस्वारे विवृत्त्यां तु विरामे चाक्षरद्वये। द्विरोष्ठ्यौ तु विगृह्णीयाद् यत्रोकारवकारयोः (पा० शि० २४) इति पाणिनीयात् ओष्ठयोर्विश्लेषेण च। ओष्ठस्थानिकस्यैवोत्पत्तिः सम्भाव्यते। एकप्रयत्नत्वात् प्रयत्नान्तरेणोच्चारणे मानाभावाच्च॥

१ अत्राऽनुस्वारेऽर्धमात्रिकत्वकथनमपि वैदिकोच्चारणपरम्। तेन गुँकाररूपेऽनुस्वारे या उकारश्रुतिः तत्र क्षिप्रता पर्य्यवसिता॥

२ पूर्वं स्वरं स्वीयमात्रातो न्यूनेनकालेन व्यञ्जनेन सह उच्चार्यावशिष्टकालेनावस्थानमेव गुरुत्वम्। आद्यपतनाऽसमवायिकरणं गुरुत्वमिति लक्षणात्। पूर्वस्वरस्याऽग्रिमव्यञ्जनेन संबन्ध एव निपतनमत्र बोध्यम् इत्याद्यूह्यम्॥

अथ संयोगाद्यमनुस्वारमेव स्पष्टयति—

**अनुस्वारस्योपरिष्टात् संयोगो यत्र दृश्यते ।**
**ह्रस्वं तं तु विजानीयात् "सꣳस्थामिति दर्शनम् ॥४३॥**

**अनुस्वारेति ।**—यत्र । दीर्घाद्वा ह्रस्वाद्वा परस्येति शेषः । अनुस्वारस्य । उपरिष्टात् अग्रे संयोगो दृश्यते । तत्र तम् अनुस्वारम् ह्रस्वम् विजानीयात् । न दीर्घम् । किन्तु गुरुत्वं ह्रस्वेऽपि योज्यम् प्रतिज्ञासूत्रादिविधानात् ॥ ४३ ॥

एवं सर्वत्र दीर्घात्परस्यानुस्वारस्य मात्रिकत्वे प्राप्ते क्वचिद् द्विमात्रिकत्वमपि व्यवस्थापयति—

**अनुस्वारो द्विमात्रःस्या-दृवर्णव्यञ्जनादिगः ।**
**ह्रस्वाद्वा यदि वा दीर्घाद् "देवानाꣳ हृदये" यथा ॥४४॥**

**अनुस्वारो द्विमात्र इति ।**—ऋवर्णपरं व्यञ्जनमिति शाकपार्थिवादिसमासे कृते ऋवर्णव्यञ्जनस्य आदौ गच्छति प्राप्नोतीति ऋवर्णव्यञ्जनादिगः । अनुस्वारः द्विमात्रः । एव । स्यात् । न तु द्विमात्रिके मात्रिक" इति पूर्ववचनादेकमात्रिकः इत्याह । ह्रस्वात् एकमात्रिकात् वा अपि । परोऽनुस्वारो भवेत् इति शेषः । यदि वा अथवा । दीर्घात् द्विमात्रिकवर्णात् अपि परोऽनुस्वारो भवेत् तदा सर्वत्रैव द्विमात्रिकोऽ

---

१ अत्र ४४ तमं पद्यं पठित्वा "अनुस्वारस्योपरिष्टात् संवृतं यत्र दृश्यते । दीर्घं तं तु विजानीयात्—श्रोताग्रावा ग.कं [ गं ] यथा" इति विशेषं पठित्वा एतत् ४३तमं पद्यं पठितम् क,ख,ग० ॥

२ तच्च आद्यपतनाऽसमवायिकारणमिति लक्षणलक्षितमेव ग्रहीतव्यम् । अत एव संयोगे परे यत्र२ गुरुत्वं विहितं तत्र२ संयोगात् पूर्वस्य वर्णस्य पतनत्वं संयोगाद्यावयवाऽऽसक्तस्वरूपं दृश्यते । संयोगाद्यस्य अवयवस्य पूर्वाङ्गत्वेन पूर्वं ( या०शि०व०प्र० २४ ) प्रतिपादनात् । "सꣳस्थाम्' ( शु०य०सं० १६।२६ ) इति प्रदर्शनम् । उपलक्षणं ज्ञेयमित्यर्थः । यथा—सꣳस्थामित्यत्र सऽगुँस् थामिति श्रुतौ संयोगाद्यावयवसकारेण सह गुँकारस्योच्चारणं कृत्वाऽवस्थानात् तत्र गुरुत्वम् । ताꣳसवितुरित्यत्रतु ताऽगुँ सवितुरिति श्रुतौ गुँकारे पतनत्वं नोपलक्ष्यते अग्रिमवर्णेन सहोच्चारणाभावात् । इति भावः ।

नुस्वारः कर्तव्यः । यथा—"देवानाᳬं ह्रदये" (शु० य० सं० १६।४४) इत्यत्र ऋवर्णपरकव्यञ्जनहकारोदयेऽनुस्वारो दीर्घादपि नकारोत्तराकारात्परो दीर्घ एव प्रयुज्यते । न ह्रस्वः एवमन्यत्रापि ऋवर्णव्यञ्जनादिगत्वेनाऽनुस्वारस्य दीर्घत्वमेवेति व्यवस्थितम् ॥ ४४ ॥

इत्थं छन्दसि सर्वत्र प्राप्तां व्यवस्थां नियमयति—

**अनुस्वारस्तु यो दीर्घा-दक्षराद्यो भवेत् परः ।**
**स तु ह्रस्व इति ज्ञेयो मन्त्रेष्वेव विभाषया ॥ ४५ ॥**

**अनुस्वारस्त्विति**—योऽनुस्वारो दीर्घादक्षरात् परो भवेत् । सतु । ह्रस्वः इति एव । सर्वत्र ज्ञेयः । विभाषया ऋवर्णव्यञ्जनादिगत्वादनुस्वारस्य द्विमात्रिकत्वम् अन्यत्रह्रस्वत्वम इति व्यवस्थि वि-ल्पेन यदुक्तम् तत् । मन्त्रेष्वेव । नतु मन्त्रातिरिक्तब्राह्मणादिविभागेष्वपि । अतो मन्त्रातिरिक्तस्थलेषु ऋवर्णव्यञ्जनादिगोऽप्यनुस्वारो दीर्घात्परश्चेत् न द्विमात्रिकः प्रयोज्यः किन्तु ह्रस्व एवेति व्यवस्था नियमः ॥ ४५ ॥

अथ पूर्वम् ( या० शि० स्व० प्र० ७३ ) उक्तान् अपि ऊष्मणः स्वरूपान् यत्र परम् ओभावप्रापकमुकारादि पदम् नास्ति तत्रैव ओभावत्वमूष्मणः स्वरूपं न सर्वत्रेति विशदयितुम् अनूद्यते—

**ओभावश्च विवृत्तिश्च श-ष-सा रेफ एव च ।**
**जिह्वामूल-मुपध्मा च गतिरष्टविधोष्मणः ॥ ४६ ॥**

**ओभावश्चेति**—ओभाव-विवृत्ति-श-ष-स-रेफ-जिह्वामूलो—

---

१ तेन "नमोऽस्त्वस्त्रने" ( शु० य० सं० १६।२० ) इति मन्त्रस्य जटादिविकृतिपाठे 'तस्कराणाᳬं स्तकायिभ्यः' इत्यत्र ऋवर्णव्यञ्जन दिगत्वेन दीर्घात्परस्यानुस्वारस्य द्विमात्रिकत्वमेव मन्त्रावयवत्वात् ॥

२ अत्र प्रकरणेऽनुस्वारपदेन सर्वत्रैवाऽऽदेशरूपो ह्रस्वदीर्घौ ᳬकारᳬंकारौ गृह्येते । "अं इत्यनुस्वारः" ( शु०य०प्रा० ८।११ ) इत्युपलक्षितो बिन्दुरूपोऽनुस्वारस्तु न गृह्यते अस्य सर्वस्यामपि संहितायामविद्यमानत्वात् । रोष्मसु गुंकारादेशात् । अन्तःस्थासु अनुनासिक-यँ-वँ-लँ-इत्यादेशात् । क्वचिच्छरिरेफे च अनुनासिक [ ँ ] स्वरूपं गतत्वाच्च । तेन यत्र शुक्लयजुर्वेदे बिन्दुरूपोऽनुस्वारो दृश्यते स लेखप्रमाद एव॥

पध्मरूपा । ऊष्मणः विसर्गस्य । अष्टविधा । गतिः वर्णापत्तिः । भवतीति शेषः ॥ ४६ ॥

किं सर्वत्रैव ओभावप्रसङ्गे विसर्गविकारः प्रत्येतव्यः ? इत्याशङ्क्याह—

**यद्योभावप्रसन्धानमुकारादि परं पदम् ।**
**स्वरान्तं तादृशं विद्याद् यदन्यद् व्यक्तमूष्मणः ॥४७॥**

यदि । उकार आदिर्यस्य तत्–उकारादि । परम् । पदम् । ओभावप्रसन्धानम् गुणकृत्येन ओत्वप्रापकम् । भवेदिति शेषः । तदा । तादृशम् ओत्वप्रापकं पूर्वंपदम् स्वरान्तम् । अवर्णान्तम् विद्यात् । न विसर्गान्तमिति भावः । इति यत् ऊष्मणः विसर्गस्य संबन्धिनः । ओभावात् । अन्यत् ओत्वान्तरम् । तद् ऊष्मविकारातिरिक्तमोत्वम् । अत्र । व्यक्तम् । स्पष्टीकृतम् । अर्थात्-यत्र परं पदम् उवर्णादि न भवेत् तत्रैव विसर्गविकृतित्वमोभावस्य । यत्र च परं पदम् उवर्णादि भवति तत्र पुनर्नोष्मविकारत्वमोत्वस्य किन्तु तत्र गुणकृत्यैनैवौत्वविकृतित्वमिति विवेकः ॥ यथा 'इषेत्वोऽर्ज्जेत्वा' ( शु० य० सं० १।१ ) इत्यत्र ऊर्ज्जेतिपरं पदमुवर्णादि अस्ति । अतः । ओभावप्रसन्धानमत्र पूर्वं पदं स्वरान्तम् 'त्वा' इति ज्ञेयम् । तेन ऊष्मविकारो नाऽत्र प्रत्येतव्यः अन्यत्र 'कुक्कुटोसि' ( शु० क० सं० १।१६ ) इत्यत्र परं पदम् 'असि' इत्येतत् उवर्णादि नास्ति । अतः । अत्र ओभावप्रसन्धानं पूर्वं पदम् 'कुक्कुटः' इति विसर्गान्तं ज्ञेयम् ॥ ४७ ॥

अथाऽष्टविधोष्मणः नामनिर्देशभङ्ग्या उच्चारणप्रकारंव्यनक्ति—

**ओभावमागता योष्मा तां तु केलिं विनिर्द्दिशेत् ।**
**विवृत्तिप्रत्यया चोष्मा विज्ञेया विकटाऽऽनना ॥ ४८ ॥**
**लीढा-ऽतिलीढ-विद्युच्च श-ष-सेषु प्रकीर्त्तिताः ।**
**जिह्वामूले च रेफे च विज्ञेया विकटा शठा ॥ ४९ ॥**
**उपध्मानीयसहिता पुष्पिर्णान्तां विनिर्द्दिशेत ।**
**अन्यत्र या भवेदूष्मा सुलभां तां विनिर्द्दिशेत ॥५०॥**

ओभावेति त्रिभिः।—या ऊष्मा ओभावं प्राप्ता तां तु केलिं विनिर्दिशेत्। तस्योच्चारणे प्रयासाभावात्। विवृत्तिप्रत्यया विवृत्तिरूपं प्राप्ता च ऊष्मा विकटानना विज्ञेया। तस्या उच्चारणे आननस्य विकटाकृतिरूपेण करणात्। शभावे जिह्वामध्येन तालुनिउच्चारणात् लीढा (आस्वादितेत्यन्वर्थत्वात्)। षभावे जिह्वाग्रंप्रतिवेष्ट्यमूर्धन्युच्चारणात् अतिलीढा (अत्यन्तास्वादितेत्यन्वर्थनाम)। सभावे जिह्वाग्रेणोच्चार्य शीघ्रतया दन्तेभ्यो जिह्वाविश्लेषात् विद्युत् च प्रकीर्तिताः। क्रमेणेति शेषः। जिह्वामूले जिह्वामूलीयभावं प्राप्तायामूष्मणि हनुमूलेनोच्चारणात् मुखाकृतेर्विकटात्वं जायतेऽत एषा विकटा ज्ञेया। रेफभावे प्राप्ते ऊष्मणि दन्तमूलस्थाने जिह्वायाः प्रतिवेष्ट्याऽग्रेणोच्चारिते शठा। उच्चारणे काठिन्यदायिकत्वात्। उपध्मानीयभावे (मुखाकृतेर्विकसितत्वात्) पुष्पिणीं विनिर्दिशेत्। अष्टविधगतेरन्यत्र या ऊष्मा तां सुलभां विनिर्दिशेत् (विसर्गस्य सुखेनोच्चारणसंभवात्)॥ ५०॥

इत्थं प्रसक्त्याऽनुप्रसक्त्याऽनुस्वारविसर्गौ विविच्य स्पर्शानामनन्तरमन्तस्थानामवसरः तत्र रेफलकारौ स्वरभक्तिप्रकरणे निर्दिष्टौ अधुना यकारवकारयोरुच्चारणे विशेषतां दर्शयति—

**पादाद्यं च[1] पदाद्यं च[2] तथाऽवग्रहकालिकम्।**
**सुस्पृष्टं[3] [4]वं विजानीयात् तत्तत्[5]कालनिबन्धनम्॥ ५१॥**

पादाद्यमिति—पादस्याद्यम्। च पुनः। पदस्याद्यम्। च। तथा। अवग्रहकालिकम्। वम् वकारम्। सुस्पृष्टम् कालविलम्बेन गुरुभूतम्। उच्चारयेत् इति शेषः। तत्तत्कालनिबन्धनम् एतच्च वकारस्य कालविलम्बेनोच्चारणम् निर्दिष्टपादादिवकारोच्चारणाऽवसरे एव कार्यम्। अर्थवेलायां तु वकारेणार्थं कुर्यादिति भावः॥ ५१॥

**पादादौ च पदादौ च संयोगावग्रहेषु यः[6]।**
**जँशब्द इति विज्ञेयो योऽन्यः स य इति स्मृतः॥५२॥**

---

१ तं ग, घ०॥ २ तं ग, घ०॥ ३ ईषत्स्पृष्टं वि ग, घ०॥ ४ यं ङ०॥ ५ तस्मिन् काले तु कारयेत् ग, घ०॥ ६ च जातिरि०॥ ७ जः ग, घ०। यः च०॥ ८ उपसर्गं परो०। त्वदर्थेवा०। त्रिभावया य०। यदेव ल०। उपां शु० १९–२९ इत्येवं क्रमेण पाठः ज०॥

**पादादौचेति** ।—पादस्याऽऽदौ च यकारो यथा—"यज्ञेन" ( शु० य० सं० ३१।१६ ) इति । पदस्याऽऽदौ च यकारो यथा—यज्ञम् शु० य० सं० ३१।१६ ) इति । संयोगश्च अवग्रहाश्च तेषु । संयोगश्चात्र प्रतिज्ञासूत्रोक्त रेफ-हकार-यकार कारैरेव ग्राह्यः । उत्तरत्र ( या० शि० व० प्र० ५६ ) तथैव वक्ष्यमाणत्वात् तथा भूते संयोगे यथा— "सूर्य्य" ( शु० य० सं ३।६ ) । "गेह्याय" ( शु० य० सं १६।४४ ) । "धाव्यारूपम्" ( शु० य० सं० १९।२४ ) सामान्युग्भिः" ( शु० य० सं०२०।१२ ) इति । च पुनः । अवग्रहेषु वेष्टनाऽपरपर्यायेषु यथा— "यज्ञा यज्ञियं-(शु० य० सं० १२.४) मिति सांहितिकस्य पदस्य पद-पाठकाले "यज्ञायज्ञियमिति यज्ञा । यज्ञियम् । ( शु० य० प० १२।४ ) इत्थं विच्छेदे कृते यज्ञियपदस्यादिभूतो यकारः । तत्र तत्र सर्वोऽपि । यः अन्तस्थानाम् आदिः । जशब्दः जकाररूपध्वनिः । सुस्पृष्टः इत्यर्थः । इति एवं प्रकारेण । विज्ञेयः चवर्गतृतीयत्वेन उच्चारणीयः इत्यर्थः । यः । अन्यः उक्तातिरिक्तस्थलस्थोयकारः । सः । य इति स्मृतः । ईष-त्स्पृष्ट एव उच्चारणीयः । संयोगावग्रहेष्विति पृथग्विशेषणम् अपदा-दिस्थस्याऽप्यन्यहलसंयुक्तस्य चोपलक्षणम् । अथान्तस्थानामाद्यस्य पदादिस्थस्यान्यहलसंयुक्तस्य संयुक्तस्यापि रेफोष्मान्त्याभ्याम् ऋकारेण चाविशेषेणादिमध्यावसानेषूच्चारणे जकारोच्चारणम् । द्विर्भाविप्येवम्" ( का० प० प्र० सू० २ १-२ ) इति ॥ ५२ ॥

किञ्च वकारं विशिनष्टि—

# वकारस्त्रिविधः प्रोक्तो गुरुर्लघुर्लघूतरः ।
# आदौ गुरुर्लघुर्मध्ये पदान्ते च लघूतरः ॥ ५३ ॥

**वकारस्त्रिविध इति** । वकारः । त्रिविधः त्रिप्रकारः । प्रोक्तः कथितः । कथम् । गुरुः १ । लघुः २ । लघूतरः ३ इति । पदस्य । आदौ । वकारश्चेत्तर्हि । गुरुः सुसंस्पृष्टः । मध्ये चेत्तदा । लघुः । पदस्यान्ते चेत् तदा । च । लघूतरः अत्यन्तः ईषत्स्पृष्टः । ज्ञेय इति शेषः । तथा च " अथान्त्यस्य ( वकारस्य ) अन्तस्थानां

---

१ घुल ज्ञातिरि० ॥ २ अस्याग्रे—"यवर्णस्त्रिविधः प्रो...तरः" इत्यधिकः ग० ॥

पदादि-मध्याऽन्तस्थस्य त्रिविधं गुरुमध्यमलघुवृत्तिभिरुच्चारणम् (का. प. प्र. सू. २।६ ) । यथा-व्वायवस्थे-( शु. य. सं. १।१ ) त्यत्र प्रथमो वकारो गुरुवृत्त्या सुसंस्पृष्टत्वेनोच्चारणीयः । अतएव सुसंस्पृष्टकरणे कालविलम्बप्रदर्शनार्थं वकारद्वयं लिखन्ति संप्रदायविदः । द्वितीयो मध्यस्थो वकारो मध्यमवृत्त्या लघुत्वेन उच्चारणीयः । तेनैवात्र वकारद्वयं न निर्दिष्टम् । पदान्तीयस्तु सन्धिजः तदर्थं च अनुपदमेव वक्ष्यति ॥ ५३ ॥

एवं सर्वत्र पूर्वोद्दिष्टस्थलस्थयोः यकारवकारयोः सुसंस्पृष्टत्वे प्राप्ते व्यवस्थापयति—

**[1]सन्धिजौ च पदान्तीया-वुपसर्गपरौ लघू ।**
**अथ-मा-स-न-शब्देभ्यो विभाषाऽऽम्रेडिते यवौ॥५४॥**

सन्धिजौ चेति–सन्धिजौ "इकोयणचि, एचोऽयवायावः" ( पा. ६।१।७७।७८ ) इति इगेचोः स्थाने जातौ पदान्तीयौ पदान्ते वर्त्तमानौ । यवावित्युत्तरेणान्वेति । लघू मध्यमवृत्त्यपेक्षयाऽपि जिह्वाग्रोपाग्रमध्यमूलानां शैथिल्येनोच्चारणात् लघूतरौ । भवतः इति शेषः । यथा—"तवं व्वायवृतस्पते" ( शु० य० सं० २७।३४ ) इति । यकारस्य तु विशेषं वक्ष्यत्याचार्य एव "यकारो नान्ययुग्यदि" ( या० शि० व० प्र० ५६ ) इति । च पुनः । उपसर्गपरौ प्राद्युपसर्गपरीभूतौ । तथा । अथ—मा-स-न-शब्देभ्यः अथशब्दात् माशब्दात् सशब्दात् नशब्दाच्च । परावितिशेषः । आम्रेडिते द्विरुक्तपदस्य परं यत् आम्रेडितसंज्ञकं रूपम् तत्र च वर्त्तमानौ इत्यर्थः । यवौ यकारवकारौ । लघू ईषत्स्पृष्टौ । विभाषा व्यवस्थितविकल्पेन । भवत इति शेषः । व्यवस्थितत्वं तु सुसंप्रदायाधीतानुसारि बोध्यम् । तच्चाग्रे (पृ० ११५) "उपसर्गपरो यस्त्वित्यादिना स्पष्टयिष्यामि ॥ ५४ ॥

पदविच्छेदे यवयोः वैशेष्यं दर्शयति—

**पञ्चमादुत्तरो यो वो यदि नैकपदे भवेत् ।**
**संहितायां लघुः सोऽथ पदकाले गुरुर्भवेत्[2] ॥५५॥**

---

१ एतत् पद्यत्रयम् ग, चातिरिक्तपुस्तकेषु नदृश्यते ॥

२ अत्रापि "जात्ये च स्वरिते चैवेति ( या० शि० स्व० प्र० ६८ ) पुनः पठितः

पञ्चमादिति—पञ्चमात् वर्गान्त्यात् । उत्तरः परीभूतः । यः । वः । यदि । एकपदे । वर्त्तमानः इति शेषः । न भवेत् । अर्थात् । वर्गपञ्चमान्तपदात् अग्रे भिन्नपदस्यादौ वर्त्तेत । तदा । सः यकारो वकारश्च । संहितायाम् सन्धौ । लघुः । भवेदित्युत्तरेणान्वयः । अथ यदि । पदकाले संहिताविच्छेदे । तादृशो यकारः वकारश्च स्यात्तदा । गुरुः सुस्पृष्टः । भवेत् । यथा—"यो रेवान्यो" (शु. य. सं. ३।२९) इति नकारात् परस्य यकारस्य पदादिस्थस्यापि लघुत्वम् । पदपाठे पुनः "यः । रेवान् । यः ।" इति तस्यैव सुस्पृष्टत्वरूपं गुरुत्वं निष्पन्नम् । एवं वकारेऽपि ज्ञेयम् । इत्थं यत्र यत्र संहितायां लघुत्वम् तत्र सर्वत्रैव पदविच्छेदकाले पदाद्ययोः यवयोः गुरुत्वं द्रष्टव्यम् । तथा हि—"उपसर्गपरो यस्तु स वकारो लघुर्मतः ॥ वो वां वा वै मन्त्रपाठे लघवो, गुरवः पदे । "प्रवायुमच्छा बृहती" (शु० य० सं० ३३।५५) "व्वातो वे" (शु० य० सं० ६।७) ति निदर्शनम् ॥ (ल. मा. शि. ८-६) इति ॥ ५५ ॥

संयोगसामान्येन यकारस्य सुस्पृष्टत्वे प्राप्ते नियमयति—

**हकार-रेफसंयुक्त ऋवर्णोदय एव वा ।**
**सुस्पृष्टं तं विजानीयाद् यकारो नान्ययुग् यदि ॥५६**

रेफहकाराभ्यां संयुक्तो यकारो यदि । अन्येन व्यञ्जनेन युक् । न । स्यादिति शेषः । तदा । तम् यकारम् । सुस्पृष्टम् । विजानीयात् । तथाविधयकारस्य जकारत्वेनोच्चारणं कुर्यादिति भावः । वा पुनः । ऋकारस्य, उदयः आगमः, तस्मिन् सति । अग्रे ऋकारे सति । यकारं सुसस्पृष्टं जानीयात् । इति भावः । एवकारात् ऋकारयोगमात्रेणैव जकारोच्चारणं क्रियते न त्वत्र नान्ययुग्यदीति-निषेधो वर्त्तते, इति सूच्यते । अन्ययुगिति अन्यपदेन उक्तरेफहकारकाराऽतिरिक्तं यकारातिरिक्तं च व्यञ्जनं गृह्यते ।

---

च० ग० तु एनम् ६८ मं पठित्वा "जात्ये च स्वरिते चैव यकारो यत्र दृश्यते । कर्त्तव्य उभयोः क्षेपः "सदस्यैरिति दर्शनम्" इति च प्रामादिकः पाठः संगृहीतः स निर्मूलत्वादुपेक्षणीयः ॥

तेन रेफ-हकार-ऋकार-यकारैरेव योगे जकारोच्चारणं फलितम् यकारे-अन्यत्वाभावात् तथाहि—"द्विर्भावेऽप्येव—( का० प० प्र० सू० २।२ ) मिति ॥ ५६ ॥

उपसर्गपराविति विशदयति—

( क ) उपसर्गपरो यस्तु पदादिरपि दृश्यते ।
ईषत्स्पृष्टो यथा 'वियत्' पदच्छेदे परो भवेत् ॥
( ख ) विभाषया यकारश्च
नित्यमाम्रेडितेऽपि च ।
यत्र यत्रेति, मा यज्ञं तथा मेति पदादपि ॥
( ग ) अथात उत्तरो यः स्यात्
तथा नेति पदात् परः ॥
भवतीत्यपि पूर्वैव तथा च सपदादपि ।

---

१ एते निरङ्काः "सन्धिजौ च पदान्तीयाउपसर्गपराविति ( या० शि० व० ५४ ) श्लोकार्थकाः क्वचिदुपलभ्यमानाः व्याख्यायन्ते ॥ २ यः स छ० ॥ ३ यु क, ख ग०। या छ० ॥ ४ दात् छ० ॥ ५ 'उपसर्गपरो यत्र यत्रकारौ पदादिगौ ॥ ईषत्स्पृष्टौ ततो ज्ञेयावभियुद्धय, उपायथा ॥ परिव्राजपतिः कत्रिः प्रत्नोचं च निदर्शनम् । अनु योजान्विन्द्वते तु, उपयज्ञं विना तथा ॥" व० र० प्र० शि० २०६–२१० इति विशेषः तत्र "अनु-उप-इत्युपसर्गाभ्यां परीभूतयोः "योज-यज्ञशब्दस्थयोः यकारयोः यो लघु-त्वपर्युदासः, सः पादादिस्थत्वेनैव सिद्धः । "पादादौ च पदादौ चेति वचने ( या० शि० व० ५२ ) पदादिकथनेनैव सिद्धे । पुनः पादादिग्रहणं बाधकबाधनार्थम्". इति तत्र प्रतिपादितत्वात् । तेन लघुमाध्यन्दिनीशिक्षायाम् "उपसर्गपरस्य न । उपयज्ञं मानुषाणामपियन्तीत्युदाहृतिः" ॥ ६ ॥ इत्यत्र "उपयज्ञम्" इत्युदाहरणं चिन्त्यम् । पादादावितियाज्ञवल्क्यवचोविरोधात् । तस्याः माध्यन्दिनमहर्षिप्रणीतत्वेमानाभावाच्च ॥

६ स्यात् क, ख, ग, घ० ॥ २७ कोष्ठान्तर्गतः पाठोऽधिकः छ० ॥ ८ भवन्त्येतेऽपि पूर्वत्र छ० ॥

( घ ) अथाव्वयमादित्यादावथो षेऽअस्यदृश्यते ।
नयत्परो यथा च स्यात् सपदे तदुदाहृताः ॥

उपसर्गपरो यास्त्विति । यदि । उपसर्गपरः उपसर्गात्परी भूतः । यः यकारः । पदस्याऽऽदिः अपि दृश्यते । तदा । स यकारः । ईषत्स्पृष्टः । ज्ञेयः इति शेषः । अर्थात् तत्र जकारोच्चारणं न कुर्यात् । यथा–"वियत्" ( शु० य० सं० १२।३४ ) इत्यत्र 'वि' इति उपसर्गपदात्परो यदिति पदस्य आदिरपि यकारः ईषत्स्पृष्ट एव न सुस्पृष्टो जकारः । अयमेव यकारः । पदच्छेदे पदपाठकाले ले परो भवेत् । सुस्पृष्टो जकार एवोच्चारणीयः । यथा–व्वि । षत् । (शु०य०प० १२।२९) इति (क) ॥

उपसर्गात्परस्य पदादिस्थस्यापि यकारस्य यत् ईषत्स्पृष्टत्वमुक्तम् स यकाररूपः ईषत्स्पृष्टविधिः । विभाषयाव्यवस्थितविकल्पेन । स्यात् । इत्थं यत्र यत्र उपसर्गपरो यकारः पादस्याऽऽदौ स्थितः । तत्र तत्र " अनुषोजान्विन्द्रते हरी'" ( शु० य० सं० ३।५२ ) इति । एवम् "इन्द्रमिद्धरी' स्तुतीरुपं, यज्ञं च मानुषाणाम्" ( शु० य० सं० ८।३५) इत्यादौ यकारस्य उपसर्गात्परीभूतस्याऽपि पादादिस्थनियमात् जकारोच्चारणम् । पादादिस्थाऽभावे सर्वत्र उपसर्गात् परस्य यकारस्य ईषत्स्पृष्टतैवेति नियमः । तेन "अनु यँव्विश्वे" ( शु० य० सं० ३३।८०) इत्यत्र अनूपसर्गात् परस्य यकारस्य न जोच्चारणम् । पादादिस्थाऽभावात् । अपि च । आम्रेडिते द्विरुक्तपदस्य परस्मिन् रूपे । वर्त्तमानः । नित्यम् । यकारः ईषत्स्पृष्ट इत्यर्थः । यथा—"यत्रं यत्र" ( शु० य० सं० २९।४३ ) इति । 'मा' इतिपदात्परोयकारः । यथा—"मा यज्ञम्" (शु० य० सं० ५।३) इति । अत्र नेषत्स्पृष्टत्वम् । ॥(ख)॥ "अथ" इति । अतः अस्मात् पदात् । उत्तरः परीभूतः । यः यकारः । स्यात् । सोऽपि ईषत्स्पृष्टो न भवेदित्यर्थः । एवं वकारोऽपि बोध्यः । तथैवाग्रे उदाहरिष्यते "अथाव्वयमादित्यादावथोषेऽस्य दृश्यते" इति । तेन व्वयमिति पदस्थवकारस्य नित्यं

१ इमे कादिघान्ताःश्लोकाः समानानुपूर्व्या ल. अ. शि. ५-८ सन्ति ।

सुस्पृष्टत्वं ज्ञेयम् व्यवस्थितविभाषाश्रयणात् । एवमन्यत्राप्यूह्यम् । ' न " इति पदात् परः । तथा व्यवस्थितविकल्पेन सुस्पृष्टः तथा च ' स ' इति पदात् परो यकारः । अपि व्यवस्थितविकल्पेन ईषत्स्पृष्टः इत्यर्थः । एवं वकारोऽपि । अपि यद्यपि । यकारः । पूर्वः पदादिः एव । अत्र पादपूरणे सन्धिः । भवति स्यात् । तथाऽपि विभाषया व्यवस्थितविकल्पेन यकारः स्यात्तेन क्वचिन्न क्वचिन्नित्यम् क्वचित् व्यवस्थितविकल्पेनेति सिद्धम् । तेन—सयोजते (शु० य० स० १५।३३ ) । सयुजा ( शु० य० सं० ११।१५ ) । सयावभिः ( शु० य० सं० ३३।१५ ) । सयुधऽइ ( शु० य० सं० १७।३५ ) । नयत्परः ( शु० य० सं० २०।८२ ) । नयन्तु ( शु० य० सं० ३७।७ ) इत्यादिविहाय 'न-स' शब्दाभ्यामपि परस्य यकारस्य जकारोच्चारणम् नित्यम् । यथा-सय्यन्ता ( शु० य० सं० ६।२६ ) । मनोनंयषु (७।१७) इत्यादौ समुपसर्गात्तु मकारस्य अनुनासिक-यँकारादेशेन यकारद्वययोगात् नित्यं जकारोच्चारणम् । यथा—सँय्यज्ञपतिराशिषा ( शु० य० सं० ६।१० ) । इति एवमेव सुसम्प्रदायाधीतानुसारिण्या व्यवस्थया ऊह्यम् । नतु स्वेच्छया यत्र कुत्रापि विकल्पनीयमिति दिक् ( ग, घ ) ॥

यवयोरुच्चारणे वैशेष्यम् उक्त्वा वकारेऽन्यदपि वैशेष्यं वक्तुमुपक्रमते—

**(ङ) यदेव लक्षणं यस्य वकारस्यापि तद्भवेत् ॥**
**यत्र यत्र विशेषः स्यादिदानीं स सं कथ्यते ॥**

**यदेवेति** । यकारस्य । यदेव । लक्षणम् । प्रोक्तम् । तद् । वकारस्याऽपि । सुस्पृष्टत्वेषत्स्पृष्टत्वविधौ इति शेषः । भवेत् । यत्र यत्र । विशेषः विशिष्टविधिः । स्यात् अपेक्ष्यते । सः सः विशेषः । इदानीम् अग्रे । कथ्यते ( ङ )

---

१ तु छ०

तत्र पदादिवकारस्य क्वचित् सुस्पृष्टताम् अपवदति—

(च) त्वदर्थवाचिनौ वो वां वा वै यदि निपातजौ।
आदेशाश्च विकल्पार्था ईषत्स्पृष्टास्तु ते स्मृताः[1]॥

त्वदर्थेति। वसिति "बहुवचनस्य वस्नसौ" (पा. ८।१।२१ इति विहितः। वामिति च "षष्ठीचतुर्थीद्वितीयास्थयार्वांनावौ" (पा. ८।१।२० इति विहितः। त्वदर्थवाचिनौ युष्मच्छब्दार्थवाचकौ। तथा। यदि निपातजौ निरर्थकौ। केवलपादपूरणौ इति यावत् वा शब्दो वै शब्दश्च। च पुनः। आदेशाः इकोयणचि, एचोऽयवायाव" इत्यादिप्रदेशाः। चपुनः। विकल्पार्थाः वाशब्दाः। ते एते सर्वे वकाराः। तु एवार्थे। ईषत्स्पृष्टाः। स्मृताः। अर्थात् लघवः उच्चारणीयाः। न तु गुरवः करणीयाः। बुधैरिति शेषः। क्रमेणोदाहरणानि—"देवो वः सविता" (शु. य. सं० १।१) इति अत्र वसो वकारस्य पदादित्वेन सुसंस्पृष्टत्वे प्राप्तेऽनेनेषत्स्पृष्टता। या वाङ्कशा" (शु. य. सं. ७।११) इति अत्र वामित्यस्य वकारः। ईषत्स्पृष्टः। "क्वातो वा" (शु. य. सं. ९।७) इति। अत्र निपातो वा शब्दः तत्रत्यो वकारः ईषत्स्पृष्टः क्वात इत्यत्रत्यस्तु सुसंस्पृष्टः अर्थाद्गुरुरेव। "न वा ऽउऽ एतत्" (शु. य. सं. २३।१६) इति अत्र वै इति निपातस्थो वकारः ईषत्स्पृष्टः। "मित्रावरुणनेत्रा वा मरुन्नेत्रा वा" (शु. य. सं. ९।३६) इति। अत्र वा शब्दौ विकल्पार्थौ ईषत्स्पृष्टौ। इत्थं मूले निपातादिग्रहणं स्पष्टार्थम् (च)

(क) उपांशु स्वरितं वापि योधीते वित्रसन्नपि।
अपरूपसहस्राणां सन्देहे स प्रवर्त्तते॥

(ख) पश्चाविद्यां न गृह्णन्ति जडास्तब्धाश्च ये नराः।
अलसाश्चातिरोगाश्च येषां च विसृतं मनः॥

(ग) अहेरिव गणाद्भीतः सम्मानान् नरकादिव।
राक्षसीभ्य इव स्त्रीभ्यः स विद्यामधिगच्छति[2]॥

---

१ स्याःस्पुरी छ० ॥ २ (ल. अ. शि. १०-११)

( घ ) न भोजनविलम्बी स्यान् न च नारीनिबन्धनः ।
सुदूरमपि विद्यार्थं व्रजेद् गरुडहंसवत् ॥

( ङ ) सुखार्थीचेत्त्यजेद्विद्यां विद्यार्थीचेत्त्यजेत्सुखम् ।
सुखिनश्च कुतो विद्या विद्यार्थिनि कुतः सुखम् ॥

( च ) गुणिता शतशो विद्या सहस्रावर्तिता पुनः ।
आगच्छत्येव जिह्वाग्रं स्थलान्निम्नमिवोदकम् ॥

( छ ) शतेन गुणिताऽऽयाति सहस्रेण च तिष्ठति ।
जप्ता शतसहस्रेण प्रेत्य चेह च तिष्ठति ॥

( ज ) जलमभ्यासयोगेन शैलानां कुरुते क्षयम् ।
कर्कशानां मृदुस्पर्शी किमभ्यासान्न साधयेत् ॥

( झ ) यथा खनन् खनित्रेण नरो वार्यधिगच्छति ।
तथा गुरुगतां विद्यां शुश्रूषुरधिगच्छति ॥

( ञ ) शुश्रूषारहिता विद्या अपिमेधागुणैर्युता ।
वन्ध्येव युवती तस्य न विद्या फलिनी भवेत् ॥

( ट ) गुरुशुश्रूषया विद्या पुष्कलेन धनेन वा ।
अथवा विद्यया विद्या चतुर्थी नोपलभ्यते ॥

( ठ ) हयानामिवजात्यानामर्द्धरात्रार्द्धशायिनाम् ।
नहि विद्यार्थिनां निद्रा चिरं नेत्रेषु तिष्ठति ॥

( ड ) यथा पिपीलिकाभिश्च क्रियते पांसुसंचयः ।
न बलं नात्र सामर्थ्यमुद्यमस्तत्र कारणम् ॥

( ढ ) अञ्जनस्य क्षयं दृष्ट्वा वल्मीकस्य तु संचयम् ।
अवन्ध्यं दिवसं कुर्याद् दानाध्ययनकर्मभिः ॥

( ण ) अन्नव्यञ्जनयोर्भागौ तृतीयमुदकस्य च ।
वायुसंचरणार्थाय चतुर्थमुपकल्पयेत् ॥

एते कादि-णान्ताः श्लोकाः अत्र अप्राकरणिकाअपि सर्वपुस्तकेषु समुपलभ्यन्ते अतो योजिताः । व्याख्यास्यन्ते तु प्रकीर्णकस्थले ।

ननु यवयोः वैशेष्यम् उपदिश्य । अधुना ऊष्मणाम् अवसरः । तत्र शषसानाम् विसर्गप्रसङ्गेन प्रोक्तत्वाद् हकारस्योच्यते—

**हकारं पञ्चमैर्युक्त-मन्तस्थाभिश्च संयुतम् ।**
**औरसं तं विजानीयात् कण्ठ्यमाहुरसंयुतम् ॥ ५७ ॥**

**हकारं पञ्चमैरिति**—वर्गाणां पञ्चमैः ङञणनमैः । युक्तम् । हकारम् । च पुनः । अन्तस्थाभिः यरलवैः । संयुतम् । हकारम् । औरसम् उरःस्थानीयम् । विजानीयात् । असंयुतम् वर्गपञ्चमैः अन्तस्थवर्णैश्च अयुक्तम् । हकारम् । कण्ठ्यम् कण्ठस्थानीयम् । आहुः । बुधा इति शेषः ॥ यथा—' ब्रह्मणे ब्राह्मणम् " ( शु० य० सं० ३०।५ ) इति । "गेह्यायच" ( शु० य० सं० १६।४४ ) इत्यादौ हकारः औरसः उच्चारणीयः । " नमो रोहिताय " ( शु० य० सं० १६।१६ ) इत्यादावसंयुतो हकारः कण्ठेन उच्चारणीयः ॥ ५९ ॥

**हकारो यत्र पूर्वस्थो ह्यन्तस्थाद्यो भवेत् परः ॥**
**पदकाले वियुज्येत संहितायां स औरसः ॥ ५८ ॥**

यत्र संयोगे । हकारः । पूर्वस्थः यकारात् प्राक् स्थितः । अन्तस्थानाम् आद्यः यकारः । परः हकारात् उत्तरत्र स्थितः भवेत् । तत्रेति शेषः । तादृशः हकारः स । पदकाले । यकारेणेति शेषः । वियुज्येत पृथक् भवति । तेन कण्ठस्थानीय एव हकार उच्चारणीयः इत्यर्थः यथा—"सिंह्यसि" ( शु. य. सं० ५।१० ) इत्यस्य पद·

---

१ स्थैश्चापि ख, च० ॥
२ स्थो अन्त क, ख, घ० । स्थ अन्तस्थाद्य भ ग० ।
त्र अन्तस्थश्च भ च० ॥

पाठे। "लिठं. ही। असि"। इत्थं यकारेण वियुक्तो हकारः कण्ठ्यः। संहितायाम् क्रमादिसन्धौ। सः हकारः। यकारयोगेनेति शेषः। औरसः उरस्त एव उच्चारणीयः॥ ५८॥

इति श्री योगिवरमहर्षियाज्ञवल्क्य प्रोक्तायां शिक्षायां वर्ण-प्रकरणे दीक्षिताऽमरनाथशास्त्रिकृतायां शिक्षावल्ल्या-ख्यायां विवृतौ सन्ध्यधिकारः॥ २॥

---

## अथ वर्णोच्चारण विधिः।

तत्रादौ औरसमेव विशदयति—

मेघदुन्दुभिनिर्घोषो ज्ञायते पयसो ह्रदात्[1]॥
एवं नादः[2] प्रयोक्तव्यः[3] सिंहस्य रुदितं यथा॥ ५९॥

मेघदुन्दुभीति। मेघस्य दुन्दुभेश्च निर्घोषो नादशब्दः। यथा। ज्ञायते श्रूयते। ह्रदात् (उत्थितस्य इति शेषः) पयसो जलस्य च निर्घोषो यथा ज्ञायते। अथ च सिंहस्य। रुदितम् गर्जनम्। यथा। ज्ञायते। एवम्। औरसहकारोच्चारणे। एतादृशः नादः। प्रयोक्तव्यः॥ ५९॥

किञ्च—

मासे भाद्रपदे मेघाः[4] शब्दं कुर्वन्ति यादृशम्॥
एवं गह्वरमासाद्य[5] "शुक्रं दुदुह्रे[6]" दर्शनम्॥ ६०॥

---

१ ह्रदे च॥ २ दं क, ख, च०। ३ व्यं क, ख, च०॥ निर्घोषः श्रूयते पयसो…। एवं नादं प्रकुर्वीत ग०। ४ मेघः शब्दं कुर्वीत ग०॥ ५ एवं नादं प्रकुर्वीत च०॥ ६ ह्रे नि क, ख, ग, घ०॥

**मासे भाद्रपद इति** । भाद्रपदे । मासे । मेघाः । यादृशम् । शब्दम् । कुर्वन्ति । एवम् । गह्वरम् कन्दराम् । आसाद्य प्राप्य । शब्दो यथा भवति । तथा नादः कर्तव्यः इत्यर्थः । यथा—"शुक्रं दुदुह्रेऽअह्नयः" ( शु० य० सं० ३।१६ ) इत्यत्र हकारोच्चारणे औरसः नादः प्रयुज्यते । अन्तस्थयोगेन औरसत्वविधानात् ॥ ६० ॥

कुत्र कण्ठ्यो हकारः तं निदर्शयन् अनुदात्तादविलम्बेनोदात्तं गत्वा ततोऽप्यविलम्बयन्नेव स्वरितमुच्चरेदिति प्रदर्शयति—

## शाखायां वानरा यद्वन् निपतन्त्युत्पतन्ति च ॥
## एवं वर्णाः प्रयोक्तव्या "इहेहैषां" निदर्शनम् ॥६१॥

**शाखायामिति** । वानराः । शाखायां । यद्वत् यथा । निपतन्ति अवरोहन्ति । च पुनः । उत्पतन्ति आरोहन्ति । इत्थम् "इहेहैषा- ( शु० य० सं० १०।३२ ) मित्यत्रेकारस्यानुदात्तत्वादधस्त उच्चारणमारभ्य हकारोत्तरे एकारे (तस्य उदात्तत्वात्)ऊर्ध्वमुच्चार्यमाणे आरोहणतुल्या श्रुतिः । द्वितीयहकारोत्तरस्य ऐकारस्य स्वरितत्वाद् अन्ते अनुदात्तस्यैव तत्र सत्वात् पुनरध उच्चारणेन अवरोहणतुल्या श्रुतिः भवति । एवम् अन्यत्रापि । वर्णाः प्रयोक्तव्याः । वानराणामारोहणेऽवरोहणे च यथा मध्ये विलम्बो न लगति तथा अनुदात्तमुच्चार्य उदात्तोच्चारणमध्ये बिलम्बो न कर्त्तव्यः । तथा चोदात्ते विरम्य मध्ये विलम्बमकुर्वन् स्वरिते विरामः कर्तव्यः । एवम् । अन्येऽपि वर्णाः प्रयोक्तव्याः कतमस्यापि स्वरस्योच्चारणं कुर्वन् मध्ये न विलम्बेत अपि तु स्वरमुच्चार्यैव विरमेत इति भावः ॥ ६१ ॥

तुल्याक्षरयोगे संयोगाद्यक्षरस्योच्चारणान्ते मात्रामेकां विरम्य द्वितीयमुच्चारणीयम् इति अभिनिधानं दर्शयति—

## कुक्कुटः कामलुब्धो यः ककारद्वयमुच्चरेत् ॥
## एवं वर्णाः प्रयोक्तव्याः "कुक्कुटोसीति दर्शनम् ॥६२॥

---

१ शेषाणां वानरा युद्धमुत्पतन्ति पतन्ति च क, ख० । शाखा...यद्वन्निपतन्नुत्प च० ॥
२ अत्र ६३।६५।६६ एतानि पठित्वा एतद ६२ तमं पठितम् ङातिरिक्त ० ॥

कुक्कुट इति । कामेन लुब्धः । यः । कुक्कुटः पक्षी । कुक् कुक् इति शब्दं कुर्वन् । ककारद्वयम् । यथा । उच्चरेत् वदति । एवम् । वर्णाः द्विवर्णसंयुक्ताः । प्रयोक्तव्याः । तत्र । "कुक्कुटोसि" ( शु० य० सं० १।१६ ) इति । निदर्शनम् उदाहरणम् । ज्ञेयमिति शेषः । अर्थात् तुल्याक्षरसंयोगादिककारमुच्चार्य मध्ये मात्रामेकां विरम्य स्थानकरणविच्छेदमकुर्वन् अग्रिमं ककारम् उकारविशिष्टं वदेत् तथाहि "द्विवर्णमेकवर्णवद् धारणात् स्वरमध्ये समानपदे" ( शु० य० प्रा० ४।१४२ इति[1] ॥ ६२ ॥

अथ चवर्ग पञ्चमस्य ( ञकारस्य ) उच्चारणप्रकारं दर्शयति—

**यथा पुत्रवती स्नेहाच् चुम्बते निजमौरसम् ।**
**एवं वर्णाः प्रयोक्तव्या "युञ्जान" इति दर्शनम् ॥६३॥**

यथा पुत्रेति । यथा येन प्रकारेण पुत्रवती माता । स्नेहात् प्रेमाधिक्येन । निजम् स्वकीयम् । औरसम् आत्मजम् । चुम्बते मुखेन मुखमालिङ्गति । एवं वर्णाः चवर्गपञ्चमविशिष्टाः प्रयोक्तव्या अत्र "युञ्जानः" ( शु. य० सं ११।१ ) इति । दर्शनम् । दृष्टान्तः । अर्थात् यथा मातुः पुत्रमुखचुम्बने मुखाकृतिः वर्तुला भवति तथा चवर्गपञ्चमस्य ञकारस्योच्चारणेऽपि वर्तुलविवृतमुखाऽऽकृत्या सुस्पृष्टता कर्तव्या इत्यर्थः । निदर्शनं चोपलक्षणम् । तेन "सञ्ज्ञानमसि" ( शु० य० सं० १२।४६ ) इत्यादावपि तथाविधमुखाकृत्या उच्चारणेन वैदिकानाम् सञ्ज्ञूँ ञानेति श्रुतिर्भवति । तथा च जिह्वाग्रेण अधोदन्तमूलं स्पृष्ट्वा

---

१ अस्य भाष्ये श्री उव्वटाचार्यपादाः—"स्वरात्संयोगादि-( शु० य० प्रा० ४।१००-११६ ) रित्यादिना प्रकरणेन यस्य द्विर्भाव उक्तः तस्यैतदुच्यते । वर्णे द्विवर्णसंयोगः एकवर्णवत् कर्त्तव्यः । मुखसंधारणा विशेषात् स्वरयोर्मध्ये वर्त्तमान(ः)म् एकस्मिन्पदे भवति । एतदभि-(नि)धानमुच्यते । इत उत्तरं द्वयोर्वर्णयोरेकीभावः प्रायशो निरूप्यते । यथा-"व्यात्तम्" ( शु० य० सं० ३१।२२ ) । कुक्कुटः" ( शु० य० सं० १।१६ ) । द्विवर्णस्वरमध्य इति किम् । "आज्ज्यम्" ( शु० य० सं० २।८ ) "भुज्ज्युः" ( शु० य० सं० १८।४२ ) । अत्र जकारस्य द्विर्भवति । नतु स्वरयोर्मध्ये यकारेण व्यवधानात् । समानपदग्रहणेन संहिता लक्ष्यते । पदविच्छेदे न भवति । यथा "इमम् । मे । इमम्मेव्वरुण" ( शु० य० सं० २१।१ )॥ इति । अत एव "यव शेषे" इति निर्दिशिका शिक्षा ( या० शि० व० प्र० ३५ ) च संगच्छते ॥

जिह्वामध्येन च तालु स्पृष्ट्वा ञकारे उच्चारिते मुखस्य वर्तुलविवर्तनं भवति। अत एव तत्र नकारञकाराभ्यां मिलितेव श्रुतिःश्रूयते इति भावः। एतेन य (ज्ञ) ज्ञ शब्दे यग्येति यद्नेति वोच्चारणं निरस्तम्। जिह्वामध्येन[1] तालावुच्चारणात् तथाश्रुतेरनुपलब्धेः। किं च जिह्वामध्यस्य तालुसंलग्ने जाते स्वभावतः जिह्वाग्रस्याधो दन्तमूलस्पर्शो जायते। तेन जकारस्थाने दकाररूपा ञकारस्थाने च नकाररूपा श्रुतिर्भासते[2] किंचिद्दन्तसम्बन्धात्। सा च भासमाना श्रुतिः अज्ञैः सम्यक्स्थानकरणयोरपरिचयेन यद्नेति अनुक्रियते। यतो दकारनकारयोरुच्चारणे जिह्वाग्रस्य ऊर्ध्वाधोदन्ते लग्नत्वात्, जकार ञकारयोरुच्चारणे जिह्वाग्रस्य अधोदन्तमूललग्नेपि जिह्वामध्यस्य तालुस्पृष्टत्वेन स्थानकरणभेदः स्पष्टः। अत्र केचन (यज्यँ) इत्युच्चारयन्ति तेऽपि परास्ताः। यँ कारस्य ईषत्पृष्टत्वात्[3]। अतः चवर्गमात्रस्योच्चारणे जिह्वाग्रस्याधोदन्तमूलस्पर्शः स्वाभाविकः। जिह्वामध्येन च तालुस्पृष्टता वाचनिकी। न तु ईषत्स्पृष्टता, इति विवेकः। सवर्णयोगे स्थानकरणविच्छेदाभावस्तु अत्रापि भवति। नासिक्यस्य गुणत्वात्[4] ॥ ६३ ॥

अथ तवर्गपञ्चमस्य तुल्याक्षरयोगे विशेषः—

**वडवा च हयं दृष्ट्वा योनिं विकुरुते यथा।**
**एवं वर्णाः प्रयोक्तव्याः 'सदुन्दुभे' निदर्शनम् ॥६४॥**

---

१ "तालुस्थाना मध्येन" इति ( शु० य० १।७९ ) प्रा तिशाख्यतः ॥

२ 'दन्त्या जिह्वाग्रकरणाः" ( १।८६ इति शु० य० ) प्रातिशाख्यतः।

३ "अचोऽस्पृष्टा यणस्त्वीष( त्स्पृष्टा ) न्नेमस्पृष्टाः शरः स्मृताः। शेषाः स्पृष्टाः हलः प्रोक्ताः" इति पाणिनीयशिक्षातः॥

४ तथाहि महाभाष्यकाराः "अपरे महाप्राणाः। यथा तृतीयाः तथा पञ्चमाः आनुनासिक्यवर्जम्। आनुनासिक्यमेषामधिको गुणः" ( म० भा० १।१।४ ) इति। अत्रत्योद्योते च अनुनासिकाकारादिषु कण्ठादिषु वाय्वभिघातादभिव्यक्तेषु वर्णेषु नासिकाभिघातेनाऽऽनुनासिक्यं धर्मं उत्पद्यते इत्यनुभवेन छिद्रादेर्च सूत्रस्थादभेदकत्वाद् गुणस्येति वाच्यम् आनुनासिक्यसंग्रहार्थम्। तथथैकोयमात्मेत्यादि भाष्यकैयटाद् तथैव लाभेन च तेषु नासिकाया देशत्वाभावस्य क्लृप्तत्वात् आदिष्वपि तथैवेत्यभिमानात्" इति॥

५ एतत्पद्यम् ६२ मस्याग्रे पठित्वा ६७ तमादि च तत्रैव पठितम् ग०॥

वड़वा चेति । वड़वा घोटिका । हयम् अश्वम् । दृष्ट्वा । यथा योनिम् । विकुरुते संकोचविकासाभ्यां विविधं करोति । एवम् । सदुन् , इत्युच्चारणे विवृतम् ओष्ठमण्डलं किञ्चिन्नासाग्रसंलग्नं मात्राकालं यावद् धृत्वा ततो दुभे, इत्युच्चारणीयमित्यर्थः एतेन नकारस्थलेऽनुस्वारवदीषत्स्पृष्टता प्रयत्नाल्पकृता वारिता भवति ॥ ६४ ॥

अथ पवर्गपञ्चमस्यापि तुल्याक्षरयोगे सति उच्चारणे वैलक्षण्यं दर्शयति—

**दर्दुरोदरदेशौ तु प्रफुल्लेते पुनर्यथा ।**
**एवं वर्णाः प्रयोक्तव्याः "अपाम्फेने" निदर्शनम् ॥ ६५ ॥**

दर्दुरस्य मण्डूकेति प्रसिद्धजन्तोः उदरदेशौ प्रफुल्लेते वायुभरणेन स्थूलौ भवतः । पुनः अनन्तरम् । यथा प्रकृत्या स्थितौ वर्त्तेते । एवम् । वर्णाः । प्रयोक्तव्याः । तत्र "अपाम्फेने"(शु० य० सं० १६।७१) इति । निदर्शनम् । दृष्टान्तः । यथात्र मकारोच्चारणे कपोलौ किञ्चित्प्रफुल्लय संवृत्य च फेकारोच्चारणे पुनः प्रफुल्लौ कपोलौ भवतः तथा पवर्ग पञ्चमस्य स्ववर्गयुतस्य सर्वत्रोच्चारणं करणीयम् । तेन मकारेऽपि प्रयत्नदैर्घ्यं सूचितम् नकारवत् ॥ ६५ ॥

अथ विसर्गे परे पूर्वाक्षरस्य गुरुत्वं विसर्गे चेषद्विरामं दर्शयति -

**यथा भारभराऽऽक्रान्ता निश्वसन्ति नरा भुवि ॥**
**एवं वर्णाः प्रयोक्तव्याः 'अद्भ्यः सम्भृत' इत्यपि ॥ ६६ ॥**

यथा भारेति । भारभरेण आक्रान्ताः । सन्तः नराः पुरुषाः । भुवि स्थित्वा यथा निःश्वसन्ति कियन्तं कालं मुखं विवृत्य ततः संवृण्वन्ति । एवम् । वर्णाः विसर्गान्ताः । प्रयोक्तव्याः । तत्र-"अद्भ्यः सम्भृतः" इत्यपि निदर्शनम् भवतीति शेषः । यथात्र ऊष्मणः प्राग्वर्त्तिनो वर्णस्य विसर्गेण सहोच्चारणात् गुरुत्वम् कृत्वा विसर्गे विवृतं मुखं मात्रां यावद्ध्रियते ततः सम्भृत इत्युच्चार्यते तथैवान्यत्रापि विसर्गोच्चारणे कर्तव्यमिति भावः ॥ ६६ ॥

---

१ दुर्दरो जयदेशे च प्रफते पुनंयाप्यथा ।···म्फेनेतिनि क० । दरदेशे तु घ० ॥

अथाऽनुस्वारे ( ठँकारे ) परे पूर्वाक्षरस्य गुरुत्वं व्यनक्ति संयोगे च—

**यथा कामातुरा नारी शब्दं कुर्याद्दिने दिने ।**
**तच्छब्दं कुरुते प्राज्ञः "सिꣳह्यसि" निदर्शनम् ॥६७॥**

**यथा कामेति** । कामातुरा रतिभावं प्राप्ता । नारी स्त्री । दिने दिने प्रतिदिनम् रात्रौ. पतिप्रसङ्गे । शब्दम्—"सिऽ, सिऽ" इति ध्वनिम् यथा । कुर्यात् करोति । तथा । प्राज्ञः तच्छब्दम् तदनुकारिध्वनिम् । अनुस्वारे ꣳकाररूपे । कुरुते कुर्वीतेत्यर्थः । तत्र । सिꣳह्यसि " ( शु० य० सं० ५।१२ ) इति । निदर्शनम् । एतत् संयोगमात्रपूर्ववर्णस्य गुरुत्वोपलक्षणम् । तेनाऽत्र यथा सिकारोच्चारणे गुरुत्वम् तथा संयोगे परेऽनुस्वारस्य ꣳकाररूपस्योच्चारणेऽपि गुरुत्वमिति ॥ ६७ ॥

अत एव यथा संयोगादौ परे ह्रस्वाक्षरस्य गुरुत्वं व्यञ्जितम् । एवं दीर्घस्यापि गुरुत्वं बोधयति—

**पक्षौ वितत्य खे गृध्रो भ्रान्त्या संकुच्य तिष्ठति ।**
**एवं वर्णाः प्रयोक्तव्या "वार्द्धीनसो" निदर्शनम् ॥६८॥**

**पक्षौ वितत्येति** । गृध्रः पक्षी । भ्रान्त्या । खे आकाशे । पक्षौ । वितत्य विस्तीर्य । पुनः । संकुच्य । तिष्ठति । एवं वर्णाः दीर्घाः गुरुभूताः प्रयोक्तव्याः तत्र "वार्द्धीनसः" ( शु० य० सं० २४।३६ ) इति निदर्शनम् । यथा वार्द्धी, इत्यस्योच्चारणे मुखं विवृत्य पुनः शीघ्रमेव संकोच्यते वाकारस्य गुरुत्वकरणाय । तथा अन्यत्रापि गुरुभूताः दीर्घाः उच्चारणीयाः इति भावः ॥ ६८ ॥

अथ वर्णोच्चारणप्रसङ्गेन रङ्गस्वरो-( नकारमकारयोर्विकारे यदुपधानुनासिक्यं तस्यो ) च्चारणप्रकारमाह—

---

१ एते ६७-६८ तमे पद्ये न स्तः क० ।।

रङ्गे चैव समुत्पन्ने नोग्रसेत् पूर्वमक्षरम् ॥
स्वरं दीर्घं प्रयुञ्जीत पश्चान्नासिक्यमुच्चरेत् ॥ ६९ ॥

रङ्गे चैवेति। रङ्गे समुत्पन्ने सति अर्थात् नकारमकारयोर्विकारेण उपधानुनासिक्ये जाते। पूर्वमक्षरं नोग्रसेत्–अर्थादनुस्वारे इव पूर्वाक्षरस्य गुरुत्वकरणेन शीघ्रं वाङ्नोच्चरेत्। किन्तु। स्वरम् पूर्वाक्षरम् दीर्घम् विलम्बितम्। प्रयुञ्जीत उच्चरेत्। पश्चात् पूर्वाक्षरस्य दीर्घत्वेन उच्चारणाऽनन्तरम्। नासिक्यम् अर्धानुस्वारम् रङ्गाख्यमित्यर्थः। उच्चरेत् व्याहरणीयम्। एतेन मात्रिके अकारस्वरेऽपि संवृतत्वाऽविघातं यथा स्यात् तथा दीर्घत्वं योजनीयम् ॥ ६९ ॥

अथ तमेव दृष्टान्तोपन्यासेन स्पष्टयति—

यथा सौराष्ट्रिका नारी अराँ२॥ ऽइत्यभि भाषते।
एवं रङ्गः प्रयोक्तव्यो ङ्कारंपरिवर्जितः ॥ ७० ॥

---

१ न ग्राह्यं परम च०॥२ "अनुनासिकमुपधाप्रागन्तस्थायाः। शु०य०प्रा०३।१३१ इत्यारभ्य—" नुश्चाम्रेडिते " शु० य० प्रा० ४-९ इत्यन्ताधिकारे यदुपधाऽऽनुनासिक्यम् तस्मिन्॥ ३ अत एव स्वरादनुव्याहरणात् रङ्गस्यापि अनुस्वारत्वं व्यक्तम्। किंच ॐकाररूपाऽनुस्वारश्रुत्यपेक्षया रङ्गरूपाऽनुस्वारस्याऽल्पमात्रिकत्वात् अर्धानुस्वारव्यवहारः सूक्तः। तथाहि—"तीव्रतर मानुनासिक्यमनुस्वारोत्तमेष्विति शैत्यायनः। समं सर्वत्रेति कौहलीपुत्रः। अनुस्वारेष्विति भारद्वाजः। नकारस्य रेफोष्मयकारभावाल्लुप्ते च मलोपाच्चोत्तरोऽत्तरं तीव्रतरमिति स्थविरकौण्डिन्याः। व्यञ्जनकालश्च स्वरस्यात्रा– ( अनुस्वारे ) ऽधिकः" ( तै० प्रा० २।१७।१-५ ) इति। सर्वत्रानुस्वारत्वमुक्त्वा रङ्गापेक्षया मलोपाज्जातस्याऽनुस्वारस्याधिक्यं चोक्तम्। कालविषये चाऽत्राहुः उव्वटाचार्याः "अं इत्यनुस्वारो वर्णसमाम्नाये पठ्यते सकांश्चित्स्वरधर्मान् ह्रस्वोदात्तत्वादीन् काँश्चिद् व्यञ्जनधर्मान् अर्धमात्राकालत्वं स्वरवशेनोदात्तत्वादि संयोगात्मत्वं चेति गृह्णाति। इत्युभयधर्मयोगात् स्वरव्यञ्जनयोरन्यत् वर्णान्तरमत्र प्रकाशयति-' अनुस्वारो व्यञ्जनं वा स्वरो वा" ( ऋ० प्रा० १।५ ) रक्तसंज्ञोऽनुनासिक्यः। रक्तो वचनो मुखनासिकाभ्याम्। रक्तं ह्रस्वं द्राघयन्त्युभ्र ओक—( ऋ० प्रा० १।३६, १३।२०, १४।५१) इत्यादिना अनुनासिक्यस्य रक्तव्यवहारो व्यक्तः। ४ की च०। का नारी तक्रं २॥ऽ इ छ०॥ ५ प्रवक्तव्यो क०। ६ रः ख०। रेणपि ग० च०। रेण तु व छ०॥

यथा सौराष्ट्रिकेति ।—सुराष्ट्रदेशोत्पन्ना स्त्री यथा "अरा२ँ॥ऽ"। इति अभिभाषते ब्रवीति । एवम् । रङ्गः अर्धानुस्वारः । ङ्कारपरिवर्जितः ङ्कारश्रुतिर्यथा न श्रूयते तथा । प्रयोक्तव्यः उच्चारणीयः ॥ ७० ॥

किञ्च रङ्गस्याऽनुस्वारत्वं चाह –

**द्विमात्रो मात्रिको वापि नासामूलं समाश्रितः ।**
**अन्ते प्रयुज्यते रङ्गः पञ्चमैः सर्वनासिकैः ॥ ७१ ॥**

द्विमात्र इति । [3]द्विमात्रो रङ्गः स्वरयोरन्तरापन्नमनुनासिकयम् रेफव्यवहितं च । यथा—"लोका२ँ॥ऽअंकल्पयन्" ( शु० य० सं ३१।१३ ) इति । "शत्रू२ँ॥ रपं" ( शु० य० सं० ७।२७ ) इति च । अपि वा । [4]मात्रिको रङ्गः स्वरव्यञ्जनयोर्मध्ये ऊष्मव्यवहितम् नासिकयम् यथा "स्वामैर्ऽयँश्चन्द्रमसि" ( शु० य० सं० १।२८ ) इत्यादि । एवं द्विविधोऽप्ययं रङ्गः । नासामूलम् भ्रूमध्यम् । समाश्रितः प्राप्तः ( नासामूलस्थानीयः इति यावत ) । पञ्चमैः वर्गान्त्यैः जातः । नकारमकारयोर्विकारेणोत्पन्नः शाखान्तरे नमयोर्लोपेन चेत्यर्थः ।

---

१ लमुपस्थितः छ० ॥ २ कैः च, छ० ॥

३ 'हृदये चैकमात्रस्तु अर्धमात्रस्तु मूर्धनि । नासिकायां तथार्धं च रङ्गस्यैवं द्विमात्रता" ( पा० शि० २८ ) इति 'नस्त इत्यादिना ( या० शि० व० प्र० ७४ ) च व्याख्यातः । तथा रेफव्यवहितोऽपि स्वरपर एव 'लाचारक्तं यथातोयमित्यादिना ( या० शि० व० प्र० ७९ ) सर्वरङ्गत्वेन व्याख्यानात् "जहि शत्रून् क्रतून् वनस्पतीन् परिधीन् क्षिणन्ति शत्रूँ२ रनपव्ययन्तः । अनुरङ्गाः पञ्चैकार्द्ध मात्रिकाः' । अमो० शि० ४१ इति संगृहीतः ॥

४ शिष्टो व्यञ्जनपरः "९पामित्रो वसुश्चैव अञ्जनाः परिकीर्तिताः । एकार्धमात्रिकां स्थित्वा पञ्चैते चानुनासिकाः" ( अमो०शि० ४२ )। इत्यादि रूपः ।

५ तथाहि-"रङ्गस्तु द्विविधो ज्ञेयः स्वरपरो व्यञ्जनः परः ( स्वराद्वा व्यञ्जनात्परः )। पारावत ( : ? ) सवर्णाभो विहितोऽक्षरचिन्तकैः ॥ तस्य मात्रा तु हृदये अणुमात्रा तु मूर्धनि नासग्रे त्वणूनां मात्रा रङ्गस्य ( परि ? ) कीर्त्तिता ॥' ( लो. शि. ६-७ ) इति । अत्र यद्यपि साधारण्येन रङ्गस्य एकमात्रिकत्वमुक्तम् । तथापि शाखान्तराभिप्रायेण व्यञ्जनपरत्वेन वा व्यवस्थापनीयम् ।

अन्ते स्वरोच्चारणानन्तरम् । प्रयुज्यते उच्चार्यते । ननु उपधास्वर एव मुखनासिकाभ्यामुच्चार्यते अतः । सर्वनासिकः । भवतीति शेषः । न तु अयं मुखनासिकावचनः करणीय इत्यर्थः । यतोऽयं स्वरस्यान्ते प्रयुज्यते तत एव 'स्वरादनुलक्षीकृत्य प्राप्तः' इत्यन्वर्थमनुस्वारत्वमस्य ॥ ७१ ॥

इत्थं सर्वत्र रङ्गव्यवहारे प्राप्ते अन्तस्थोष्मसु संज्ञान्तरं दर्शयन् स्वरे परे विहितानुनासिक्यस्यैव रङ्गव्यवहार इति व्यवस्थापयति—

**अ[2]नन्तरं मकारस्य यो रङ्गस्तत्र र[3]ज्यते ॥**
**सर्वानुनासिकं वि[4]द्या-दे[5]षा म[6]न्योपधानिका ॥ ७२ ॥**

अनन्तरमिति । मकारस्य पवर्गपञ्चमस्य । अनन्तरम् पश्चात् । मकारादग्रे इति यावत् । ये अन्तस्थोष्माण इति शेषः । तत्र अन्तस्थोष्मसु परेषु सत्सु । यः । रङ्गः आनुनासिक्यम् । रज्यते प्रयुज्यते । तम् इति शेषः । सर्वानुनासिकम् । यदुक्तं पूर्ववचने तत्तथैव इति शेषः । विद्यात् जानीयात् । इति नात्र विवादः किन्तु । एषा अनुनासिका । उपधानिका एतन्नाम्नी । मन्या बोध्या । न तु तत्र रङ्गव्यवहारो मन्तव्यः इति तत्र मात्रिकत्वं बोध्यम् । यत्र

---

१ पाणिनिनापि बिन्दुरूपमर्धचंद्रात्मकरङ्गाख्यं चेति अनुस्वारद्वयं मनसि निधाय वर्णानां चतुष्पष्टिर्वेति वैकल्पिकी संख्या प्रोक्ता । अन्यथा 'स्वरा विंशतिरेकश्च—
(अ इ उ ऋ इति त्रिविधाः १२ । ए ऐ ओ औ इति द्विविधाः ८ । एवं २० । एको ह्रस्वऌकारः । इत्थम् २१ ) स्पर्शानां पञ्चविंशतिः । यादयश्च स्मृता ह्यष्टौ चत्वारश्च यमाः स्मृताः ॥ अनुस्वारो ( १ ) विसर्गश्च ( १ ) ᳵक ᳵपौचापि ( २ ) चापि पराश्रितौ । दुःस्पृष्टश्चापि विज्ञेयो ऌकारः प्लुत एव च (१) (पा० शि० ४-५) इति । तदेतेषां संकलनया ६३ संख्यैव वर्णानां भवति । तर्हि पाक्षिकं चतुःषष्टिर्वेति ( पा० शि० ३ ) कथनमनर्थकमेव स्यात् । किं च "अलाबुवीणेत्यादिना ( पा० शि० २३) अनुस्वारं प्रदर्श्य "स्वरा विंशतिरेकश्चेति ( पा० शि० ४-५ ) वर्णसंख्यानावसरे अनुक्तस्य रङ्गस्य "यथा सौराष्ट्रिकेति ( पा० शि० २६ ) निदर्शनमपि संगच्छते ॥

२ अनन्तरो मकारस्तु छ० ॥ ३ रंज्य क, ख० । दृश्यते ग० ॥
४ विंद्या क, ख० । ५ च्छेष छ० ।
६ वध्यो ख० । मध्यो क, ग, घ० । एतत्पद्यस्यादौ "यथा सौराष्ट्रिकेति पद्यम् "एवं रङ्गं विजानीयात् ङ्कारपरिवर्जितम्" इत्युत्तरार्धं परिवर्त्य पुनः पठितं दृश्यते क० ॥

रङ्गव्यवहारस्तत्रैव द्विमात्रिकत्वोक्तेः[1] । यथा—"[2]अहीँश्च सर्वान् (शु० य० सं० १६।५) । अन्याँस्ते (शु० य० सं० १७।११) । रासँभँष्युवम् (शु० य० सं० ११।१३) । तँल्लोकम् (शु० य० सं० २०।२५) । सँव्वँपामि (शु० य० सं० १।२१) इति ॥ रपहेषु माध्यन्दिनानां न आनुनासिक्यम् । तेषां तत्र [3]अनुस्वारो विहितः । शाखान्तरे तु[4] तत्राप्यानुनासिक्यमुपलभ्यते ॥ ७२ ॥

तदेव स्पष्टयति—

**यरलॅवाः शषसहा अँष्टैते चोपधानिनँः ।**
**वर्गान्तैँ रज्यते यस्तु सर्वैः सर्वानुनासिकँः ॥ ७३ ॥**

**यरलवा** इति । यरलवाः इत्यन्तस्थाः । शषसहाः इत्यूष्माणः । एते च । अष्ट अष्टसंख्याका ये वर्णाः । ते । उपधानिनः उपधायाआनुनासिक्यकारिणः । सर्वैः एतैः परीभूतैः । वर्गान्तैः नकारमकारैः प्रकृतिभूतैः । तु च । यः रङ्गः । रज्यते नासिकायामनुरक्तो भवति । अतोऽयमपि रङ्गः । सर्वानुनासिकः । एव भवतीति शेषः । यतोऽत्र-उपधानिनो वर्त्तन्ते तत एवास्यानुनासिक्यस्य उपधानिका संज्ञा

---

१ या० शि० व० प्र० ७६ मेन "नस्त इत्यादिना ॥

२ "चच्छयोः शम्" शु० य० प्रा० ३ । १३४ इति नकारः शकारमापद्यते । अनुनासिकं चोपधा । उत्तरत्रापि " तथयोः सम् " शु० य० प्रा० ३ । १३६ इति सकारम् नकारः उपधा चानुनासिकम् । "अन्तस्थामन्तस्थास्वनुनासिकां परसस्थानाम्" शु० य० प्रा० ४ । १० इति यलवेषु सानुनासिकान् यँवँलाँन् क्रमेण मकारः ॥ ३ " अनुस्वारं ० रोष्मसु मकारः " "नश्चान्तःपदेऽरेफे " शु० य० प्रा० । ४ । १-२ इति नकारमकारौ अनुस्वारम् आपद्येते ॥ ४ " अनुनासिका चोपधा " श० य० प्रा० ४।४ इत्यधिकृत्य "लोपं काश्यप-शाकटायनौ" शु० य० प्रा० ४।५ इति मनयोर्लोप-पक्षे अनुनासिका चोपधा भवति । यथा—"अपाँ रसेन । त्वाँ शश्वन्त ( । तपृँ षि । ताँ संवितु? । त्वाँ हि । अन्यानि माध्यन्दिनवत् ॥ ५ व शषसह क, ख० ॥ ६ रज्यते क० । रज्यन्ते ख, ग, घ० ॥ ७ काः ग० । का क, ख, घ० ८ न्ते क, ग, घ० गर्वान्ते रङ्गते यस्तु ख० ॥ ९ का क, ख, घ० ॥

भवति । अत्रापि पूर्वपद्योदाहरणान्येव ज्ञेयानि । न तु रङ्गस्य वहृतिः[1] ॥ ७३ ॥

अथ सर्वेषाम् आनुनासिक्यानां स्वरे परतो जायमानस्यैव नकारविकारस्य रङ्गत्वव्यवहारः । नाऽन्यत्र इति व्यञ्जयन् अनुस्वारापेक्षयाऽत्र वैलक्ष्यं दर्शयति-

**नस्तं उत्पद्यते रङ्गः कांस्येन समनिस्वनः ।**
**मृदु श्चैव द्विमात्रः स्याद् वृष्टिमा२ँ॥इव दर्शनम्॥७४॥**

नस्त उत्पद्यत इति-नस्तः नासामूलात् । तेन दन्तमूल्यस्थानताऽनुस्वारसामान्यप्राप्ता पाणिन्युक्ता (पा० शि० २३) निरस्ता । "नासामूलं समाश्रितः" या० शि० व० प्र० २०३ इत्युक्तत्वाच्च । कांस्येन कांस्यभाजनध्वनिना । समनिस्वनः तुल्यश्रुतिकः । रङ्गः रङ्गसंज्ञकोऽनुनासिक्यः । उत्पद्यते जायते । अत एव । मृदुः नादहीनः ।

---

१ अथाऽपरा व्याख्या-अन्तस्थायुतानां स्वराणामूष्मभिश्च युतानां स्वराणामन्ते ये रङ्गाः रज्यन्ते तत्र रङ्गश्रुतिः उपधानिकाज्ञेयेति शेषः । ऊष्मान्तस्थानांनिरनुनासिकत्वात्तेषामन्ते गऽडोपधानवदनुनासिकस्यप्रयुक्तत्वादुपधानिकेत्यन्वर्था सज्ञा यथा-"या२ँ ॥ ऽआवह" ( शु० य० सं० ८।१६ ) । "प्रथमच्छदवरा २ँ ॥ऽआ" ( शु० य० सं० १७। १४ ) । "देवा २ँ ॥ऽइदेवि" ( शु० य० सं० २३।१६ ) । अत्र लकारोदाहरणाभावात् वकारस्यैवदर्शितम् । मूले लकारोक्तिस्तु शाखान्तराभिप्राया । एवमूष्मस्वपि षसयोः ॥ "वशा २ँ ॥ऽअनु" ( शु० य० सं० ३।५२ ) । "महा २ँ ॥ऽइन्द्रोषः" ( शु० य० सं० ७।४० ) । इति ॥ वर्गैः सर्वैर्युतस्य अन्ते यश्च रङ्गो रज्यते तत्रापि रङ्गश्रुतिः उपधानिका ज्ञेया । यथा-"लोका२ँ॥ऽअकल्पयन्" ( शु० य० सं० ३१।१३ ) इति । सर्वैः स्पर्शान्तस्थोष्मभिर्युतस्य अन्ते प्रयुज्यमाने रङ्गे सर्वानुनासिकाश्रुति र्ज्ञेया । एवम् "अनन्तरं मकारस्येति पूर्ववचनेऽपि मकारयुतस्य स्वरस्यानन्तरं यो रङ्गः रज्यते तत्र सर्वानुनासिकं रङ्गं जानीयात् । एषा उपधा तु मध्योपधानिकाज्ञेयेति शेषः । इति मध्योपधानिकापाठमवलम्ब्य योज्या । अन्योपधानिकेतिपाठस्वीकारेऽस्य रङ्गस्य उपधानिकेति अन्या सज्ञा ज्ञेया इति यथापाठं कैश्चित्प्रयुज्यते । तन्न युक्तम् । तस्या अकिंचित्करत्वात् । तेन पूर्वैव व्याख्या गरीयसीति सुज्ञैश्चिन्तनीयम् ॥

२ नास्ति च० । नासादुत्प ग० ॥

न तु 'अनुस्वारवद् घोषः कर्त्तव्य इत्यर्थः । कांस्यभाजनोत्थित-शब्दस्य मृदुश्रुतिकत्वात् । च अपि । द्विमात्रः दीर्घः । एव हि । कांस्यभाजनाऽनुरणनस्य दीर्घकालावस्थितत्वाच्च । स्यात् करणीयः । द्विमात्रता चास्य पाणिनिप्रतिपादिता ज्ञेया । तद्यथा—हृदये चैक-मात्रस्तु अर्धमात्रस्तु मूर्धनि । नासिकायां तथार्धं च रङ्गस्यैवं द्विमा—त्रता, ( पा० शि० २८ ) इति । एवं द्विमात्रिकस्वरोच्चारणानन्तरम् पाणिनिपारिभाषिकद्विमात्रिकः अर्धानुस्वारः अन्तः सार्धमात्रया वहिश्च अर्धमात्रयैवोच्चारणीयः । तत्र । " वृष्टिमाँ॥ऽइव" ( शु० य० सं० ७।४० ) इति । दर्शनम् उदाहरणम् ॥ ७४ ॥

---

१ तथाहि—" आहुर्घोषं घोषवतामकारमेकेऽनुस्वारमनुनासिकानाम् " ( ऋ. प्रा. १३।१५ ) इति " अलावुवीणा निर्घोषः " ( पा. शि. २३ ) इति चानु-स्वारस्य घोषता दृश्यते ।

२ अतएवार्धाऽनुस्वारादधः सार्धद्वयङ्कं लेखे दर्शयन्ति वैदिकाः । ततो विवृत्ति-चिह्नम् च । जहिशत्रूँ ११ रपेत्यादौ तु सार्धैकाङ्कं दर्शयन्ति । तद्विवृत्तिविरहाभि-प्रायकम् । केचन तत्रापि सार्धद्वयङ्कमेव विवृत्तिचिह्नं विना ददति तेषामभिप्राय न विद्मः । एतेन स्वरस्योपधाभूतस्य द्विमात्रिकस्योच्चारणम् कृत्वान्ते रङ्गानुनासिक्यस्य च अन्तःस्थितया सार्धमात्रया व्यवहितेन अर्धमात्राकालेन उच्चारणमुभयत्र समानम् । किन्तु एकत्र विवृत्तिकालोऽधिकः अपेक्षितः इतरत्र न इति विवेकः । विवृत्तिकालश्च चाऽत्र लौकिकीमात्रा ग्राह्यः "चतसृणां विवृत्तीनामन्तरं मात्रिकं भवेत् । अर्धमात्रिकमन्येषामन्ये-षामणुमात्रिकम्"(ना० शि० ३।४) इति दर्शनात् । एवं च सार्धद्वयङ्कयुत-सानुस्वाराऽर्ध-चन्द्रचिह्नस्य दाने इदमेव रहस्यम्-सार्धया मात्रया व्यवधाय अनुस्वारम् अर्धीकृत्य च रङ्ग-मुच्चार्य विवृत्तिः श्रावणीयेति धीमद्भिरवधेयम् । "अनुस्वारश्च" इति तै० प्रा० १।३४ सूत्रात् अनुस्वारस्य मात्रिकत्वोक्तेः । रङ्गे अङ्गुलिप्रदर्शनन्तु एकस्याः तर्जन्याः एव । 'दीर्घे रङ्गे च तर्जन्याः प्रसारः परिकीर्त्तितः" (या० शि० स्व० प्र० ६४) इति वचनात् ॥

अत एव प्लुताद्विशिष्यते । तथा हि—

"ह्रस्वात्तु द्विगुणो दीर्घो दीर्घादेकगुणः प्लुतः ॥
प्लुतादेकगुणो रङ्गो रङ्गादेकगुणाधिकः ॥
महाशब्देन संयुक्तो व्यंजनं चार्धमात्रिकम् ॥
अतिरङ्गो महारङ्गाद् वृद्धो ह्येकगुणाधिकः ॥' (म० शि० ४५-४६ इति ॥

'·वण्महाँश्चवडादित्यो' 'ह्यद्धादेवमहा ँ ॥ऽअसि' । "बटसूर्य्यस्य तु सत्रातो ( शु० य० सं० ३३।३९-४० ) महारङ्गाःप्रकीर्तिताः ॥—

परिते ( शु० य० सं० ३।३६ ) परिमाग्ने ( शु० य० सं० ४।२८ ) च "अदश्र" ( शु० य० सं० ८।४० ) म्परिकीर्त्तिताः । यस्याद्वयं प्रदृश्येत अतिरङ्गाः प्रकीर्त्तिताः"

पूर्वत्र ( या० शि० व० प्र० ७२ तमे ) व्यवस्थिते रङ्गोपधानिकेति भेदव्यवहारे उपधानिकारञ्जनं दर्शयति—

**यादृशी रत्नवर्णाभा जपायाः कुसुमेऽथवा ॥**
**तादृशं रञ्जयेद्वर्णं प्रान्ते नासिक्यमाचरेत् ॥ ७५ ॥**

**यादृशीति** । यादृशी । रत्नस्य माणिक्यस्य, वर्णाभा विरल-रक्तच्छविः । अथवा "जपायाः लोके "हुडहुड" इति प्रसिद्धस्य । कुसुमे पुष्पे । विरलरक्तता अस्तीति शेषः । तादृशम् विरलानुनासिक्यम् । वर्णम् उपधास्वरम् । रञ्जयेत् अन्त्यदेशे नासिक्यं कुर्यात् । तदेव स्पष्टयति—स्वरस्य । प्रान्ते । नासिक्यम् अर्धानुस्वारम् एकमात्रिकम् । आचरेत् वदेत् । न तु उपधामेव सर्वनासिकां कृत्वा वदेदित्यर्थः ॥ जपाकुसुमे रक्तिमा यथा मूले नास्ति प्रान्तभागे एव घनीभूता दृश्यते तथैव उपधानिका उच्चार्या इति भावः । यथा—"माँस्पचन्यादौ ( शु० य० सं० २५।३६ ) माउँस्" इति ॥ ७५ ॥

रेफभावे नकारविकारोत्पन्नस्य आनुनासिक्यस्य स्वरपरत्वाभावात् कथं रङ्गत्वम् इत्याशङ्क्य आह—

**लाक्षारक्तं यथा तोयं नकारान्तं पदं तथा ॥**
**सर्वं रङ्गं विजानीयाच्-छत्रूनिति निदर्शनम् ॥ ७६ ॥**

**लाक्षारक्तमिति** । लाक्षया रक्तम् । तोयम् जलम् । यथा । जलम् रक्तम् इत्युच्यते न पुनः तत्र लाक्षा रक्ता अस्तीति भासते । लाक्षाया जलात्पार्थक्याभावात् । तथा तेनैव प्रकारेण । उपधा मात्रस्यानुनासिक्येऽपि नकारान्तं पदम् । सर्वम् । रङ्गम् । विजानीयात् ।

---

इति ॥ प्लुतापेक्षया रङ्गे उपधानिकायाम् कालाधिक्यकथनम् रङ्गोपधासमुदायविषयम् । रङ्गा ( उपधानिका ) पेक्षया महारङ्गे अतिरङ्गे च कालाधिक्योक्तिः सविष्टत्तिरङ्गोपधासमुदायविषया । अत्र ये महारङ्गाः ते एव अतिरङ्गा अपीति बोधनाय लक्षितम् 'यस्याऽद्वयं प्रदश्येतेति अमोघानन्दिन्याम् ( ४५-४६ ) । संज्ञा भेदस्तु रङ्ग संख्यापरिगणनसौकर्यार्थः ॥ पमिाणभेदश्चिन्त्य अत एव सर्वत्र रङ्गेषु समानश्रुतिमेवश्रावयन्ति वैदिकाः ॥

१ एतत् चतुष्टयम् नास्ति क, च० । ख गयोस्तु यमप्रदर्शनान्ते दृष्टम् ।

एतेन रेफान्तो रङ्गः इति स्वरपरत्वं तत्राप्यस्त्येवेति सिद्धम् । यथा— "जहिशत्रूँ ॥ रपेत्यादौ "शत्रून्परिधीन्क्रतून्वनस्पतीन् स्वरे रेफम्" ( शु. य. प्रा. ३।१४२ ) इति । नकारस्य रेफे, उपधानुनासिक्ये च कृते : शत्रून् इति पदं रङ्गम् । अस्ति । एतत् । निदर्शनम् उपलक्षणम् । ज्ञेयम्[1] ॥ ७६ ॥

अथाऽर्धानुस्वारस्य रङ्गोक्तिरन्वर्थेत्याह—

**लुप्ते नकारे यत्स्वारं रञ्जन्ति शौनकादयः ।**
**एवं[2] रङ्गं विजानीयान् नाभ्या[3]ऽऽआसीन्निदर्शनम् ॥७७॥**

लुप्तेनकार इति । शौनकादयः ऋगादिप्रातिशाख्यकाराः । नकारे लुप्ते सति । यत् । यतः । स्वारम् । स्वरवर्णम् । रञ्जन्ति नासिक्येन रक्तवर्णेन वा रक्तीकृत्य "नकार आकारोपध इत्यारभ्य प्रकरणेन दर्शयन्ति । अतः एवम् तमादिम् नकारपूर्वाक्षरम् । रङ्गं

---

१ अथ यत्रार्धानुस्वारे रङ्गसंज्ञा न जाता तत्रापि स्वरोच्चारणानन्तरमेव अर्धानुस्वारस्य उच्चारणम् कर्तव्यम् । यतः " हुँ ३तिनासिक्यः" ( शु य. प्रा ८ । १३ ) इति प्रतिशाख्यदर्शितसर्वानुनासिक्यस्य तस्मिंश्चह्लेति ( शु. य. प्रा ८। २९ ) सूत्रेण माध्यन्दिनानां निषेधः। यथा—अहीन् चेत्यादौ "चछयोः शम् शु. य. प्रा. ३।१३५ ) इतिनकारविकारेकृते " आनुनासिकाचोपधा" ( शु० य० प्रा० ४।४ ; इति या उपधानिका " अहींश्च " ( शु. य. सं. १६ । ५ ) । इत्यादि जाता तत्रापि रङ्गवदेवोच्चारणम् । द्विमात्रो मात्रिको वापी-( या. शि. व. प्र. ७१ ) तिपद्ये मात्रिको वेति वचनस्यात्रैव तात्पर्यम् । " जहि शत्रूँ॥रपे त्यादीनामेकमात्रिकत्वपरिगणनन्तु न वास्तविकमित्यपि ध्येयम् । बृहदमोघानन्दिन्याम् ( ४१ ) एषां पञ्चानामनुरङ्गसंज्ञकानां सार्द्धमात्रिकत्वोक्तेः ॥ तेन—'धामैरयँश्चन्दमसीत्यादौ 'रयउँशू चन्द्रेति ध्वनिः प्रामाणिकी । अत्रार्धानुस्वारे स्वरोच्चारणानन्तरं नासामूले हनुमूलेनोच्चारणादनुनासिकस्य उकारगर्भा श्रुतिः स्वाभाविकी भासते । इति सुज्ञैर्ज्ञेयम् ॥ २६ ॥

२ आदि क, ख, ग, घ० ॥

३ नचासीदिव विन्दति ज्ञातिरि० । वस्तुतस्तु—"नत्वाभीरिव विन्दतिँ॥" इति भवितुमर्हति । अस्मिंश्च पक्षे एवं व्याख्येयम्—"नत्वाभी० तिँ॥" ( ऋ. सं. ) इत्यत्र यथा प्लुतः स्वर इकारो रक्तः एवं नकारे लुप्ते शौनकादयः यतः उपधास्वरं रञ्जन्ति अतः तमुपधास्वरम् । रङ्गम् रङ्गनाम्ना जानीयात् ।

विजानीयात् । नाभ्याऽआसीत्" ( शु. य. सं. ३१।१२३ ) इति कण्डिकास्थोरङ्गः "लोकाँ३॥ऽअंकल्पयन्" इति निदर्शनम् उदाहरणम् । ज्ञेयमिति शेषः ॥ ७७ ॥

**पञ्च रङ्गाः प्रवर्त्तन्ते घात-निर्घात-वज्रिणाः ।**
**अहिणः प्रहिणो ज्ञेय आँ-ई-ऊ-ऋ-ओ दर्शनम् ॥७८॥**

पञ्चरङ्गा इति । रङ्गाः आकाराद्योकारान्तेषु निर्दिष्टवर्णेषु परतः क्रमेण घातादि प्रहिणान्तसंज्ञकाः सन्तः पञ्च प्रवर्तन्ते । तदुक्तं बृहदमोघानन्दिन्यामदेवाँ३॥ऽआसादय ( शु० य० सं० २२।१७ ) इति घातः ( १ ) । देवाँ३ऽइदेवि ( शु० य० सं० २३।१६ ) इति निर्घातः (२) । ऽउपागा ( शु० य० सं० ५।३९ ) । इति वज्रिणः ( ३ ) । देवाँ३॥ ऋतुभिः ( शु० य० सं० १८।३३ ) । इत्यहिणः ( ४ ) । अमित्राँ३॥ऽओषतात् ( शु० य० सँ० १३।१२ ) । इति प्रहिणः ( ५ ) मूले दीर्घस्वरनिदर्शनम् ह्रस्वस्वरस्याप्युपलक्षणम् । तेनलोकाँ३ ॥ अकल्पयन्नित्यादीनां संग्रहः ॥ ७८ ॥

अथ वर्णसामान्योच्चारणं द्वाभ्यां प्रदर्शयन् वर्णोच्चारणप्रकरणमुपसंहरति—

**यथा व्याघ्री हरेत्पुत्रान् दंष्ट्राभिर्न च पीडयेत् ।**
**भीता पतनभेदाभ्यां तद्वद्वर्णान्प्रयोजयेत् ॥ ७९ ॥**

यथा व्याघ्रीति—न च मुखात्पतेयुर्न वा दशनैर्भिन्दीरन्निति पतनभेदाभ्याम्, भीता सती । व्याघ्री यथा स्थानात्स्थानान्तरं प्रापयन्तीति शेषः । पुत्रान् । हरेत् प्रापयति । मुखेन दृढं गृहीत्वेति शेषः । हरणसमये । च पुनः । दंष्ट्राभिर्न पीडयेत् । यथा दन्तैस्तेषु छेदो न स्यात्तथा गृह्णातीत्यर्थः । तद्वत् तथैव । वर्णान् प्रयोजयेत् । वर्णाः नातिशिथिलाः नाति पीडिताः उच्चारणीयाः । यद्वा रङ्गोच्चारणकाले मुखाकृतेः शिक्षेयम् । यतः । अत्र शैथिल्येन ङकारश्रुतिः । पीडनेन

४ यथाऽई ऊ ऋ छ० ॥

च मकारश्रुतिरुत्पन्ना स्यात् । अतोऽत्र नातिविवृतम् नापि संवृतम् आस्यं कृत्वा रङ्गोच्चारणं विधेयमिति ॥ ७९ ॥

किञ्च—

**मधुरं च न चाव्यक्तं व्यक्तं चापि न पीडितम् ॥**
**सनाथस्येव[२] देशस्य न वर्णाः सङ्करङ्गताः[३] ॥ ८० ॥**

मधुरं चेति—मधुरं पठन् अव्यक्तं न कुर्यात् । व्यक्तीकुर्वन् पुनः पीडितं चर्वितं न कुर्यात् । येन माधुर्यं नश्येत् । सनाथस्य राज्ञा सहितस्य । देशस्येव वर्णाः ब्राह्मणादयो यथा अकारादयः न सङ्कर-ङ्गताः संकीर्णत्वं यथा न प्राप्नुयुस्तथा उच्चारणीया इत्यर्थः ॥ ८० ॥

इति श्रीयोगिवरमहर्षियाज्ञवल्क्यप्रोक्तायां शिक्षायां
वर्णप्रकरणे दीक्षितामरनाथशास्त्रिकृतायां
शिक्षावल्ल्याख्यायां विवृतौ वर्णोच्चा-
रणाधिकारः ॥ ३ ॥



अथ पदाधिकारः ।

## तत्र पदोच्चारणे विशेषः—

यथा सुमत्तनागेन्द्रः पदात्पदं निधापयेत् ।
एवं पदं पदाद्यन्तं दर्शनीयं पृथक् पृथक् ॥८१॥

यथा सुमत्तेति—सुमत्तश्चासौ नागेन्द्रः मदोन्मत्तगजराजः । यथा । पदात् एकं पदम् चरणं सम्यक्स्थापयित्वा । पदम् अपरं चरणं चोत्थाप्य । निधापयेत् स्थापयति । निधापयेदिति स्वार्थे णिच् । एवम् । पदम् सुप्तिङन्तरूपम् । पदाद्यन्तम् पदादि पदान्तं च पृथक्पृथक् यथा स्यात्तथा दर्शनीयम् । अर्थात् एकं पदं पदान्तविशिष्टम् उक्त्वा एकां मात्रां विरम्य अपरं पदादिविशिष्टम् पदं ब्रूयात् । येन द्वयोः पदयोः परस्परं संकीर्णतया अर्थसंदेहो न भवेत् । तथा हि "पदयोरन्तरे काल एकमात्रा विधीयते" ( या० शि० स्व० १३ ) इति । "अर्थः पदम्" ( शु० य० प्रा० ३।२ ) इति च ॥ ८१ ॥

अथ शिक्षां विना यथेच्छं अर्थविरहितं च ये पठन्ति तान् निन्दति—

गीती शीघ्री शिरःकम्पी यथालिखितपाठकः ।
अनर्थज्ञोऽल्पकण्ठश्च षडेते पाठकाधमाः ॥ ८२ ॥

गीती शीघ्रीति—गीती विहितमात्राकालतो विलम्बितोच्चारणशाली । अन्यथा छन्दोगानामधमत्वं स्यात् । शीघ्री अभ्यासातिरिक्तपाठे द्रुतवृत्तिकः । अभ्यासकाले पुनरस्याः "अभ्यासार्थे द्रुतां वृत्तिम्" ( या० शि० स्व० प्र० ४९ ) इति विहितत्वात् । शिरःकम्पी शिरसा उदात्तादिस्वरप्रदर्शकः । एतेन ये वदन्ति बह्वृचानां कण्ठस्वरप्रधानानाम् शिरश्चालनं युक्तमिति ते परास्ताः । शिरश्चालनेन यथास्वरमुच्चारणस्याऽसंभवात् । पाणिनिनापि हस्तेन स्वराऽप्रदर्शनं शिरःकम्पश्च निन्दितः । यथालिखितपाठकः गुरोः सकाशादनधीत्य पुस्तकप्रत्ययाधीती । अनर्थज्ञः अर्थः अभिप्रायः, विनियोगो वा तं

यो न जानाति सः। एतेन "कामन्तु याज्ञिकस्येति ( पा० गृ० सू० २।८ ) पारस्करगृह्योक्त्या अभिप्रायरहितोऽपि यः क्रियाज्ञः स न अधमः इति फलितम्। अल्पकण्ठः अल्पध्वनिकोऽल्पप्राणश्च। एते पूर्वोक्तधर्मविशिष्टाः। षट्। पाठकेषु अध्ययनशीलेषु। अधमाः निन्दिताः। भवन्तीति शेषः ॥ ८२ ॥

अथ सुशिक्षितपाठकान् स्तौति—

माधुर्यमक्षरव्यक्तिः पदच्छेदस्तु[1] सुस्वरः।
धैर्यं लयसमत्वं[2] च षडेते पाठके[3] गुणाः ॥ ८३ ॥

**माधुर्यमिति**—माधुर्यम् स्वभावोपनीत-ललित-पदाक्षरगुण-समृद्धत्वम्। अक्षरव्यक्तिः पदवर्णानाम् "अनुप्रदानात्संसर्गात् स्थानात्करणविन्ययात्। जायते वर्णवैशेष्यं परिमाणाच्च पञ्चमात्" ( तै० प्रा० २।२३।२ ) इति वैशेष्यम्। पदच्छेदः पदविभागज्ञानम्। सुस्वरः श्रुत्यारब्धाऽनुरणन सौष्ठवम्। तदुक्तम्—"श्रुत्यनन्तरभावी यः स्निग्धोऽनुरणनात्मकः। स्वनो रञ्जयति श्रोतुश्चित्तं स स्वर उच्यते" इति शब्दार्थचिन्तामण्याम्। धैर्यम् निर्विकारचित्तत्वम्। तदुक्तम्—"मनसो निर्विकारत्वं धैर्यं सत्स्वपि हेतुषु" इति शब्दार्थ-चिन्तामण्याम्। लयसमत्वम् कालक्रिययोः साम्यम्। यथा चर्चायां काशीस्था वैदिकाः समानेन उच्चारणावसानेन पठन्ति। पाठके। एते। षड्। गुणाः। भवन्ति इति शेषः। एत इति पुँस्त्वं विधेयाऽपेक्षया। माधुर्यादिगुणषट्कं यत्र त एव पाठकाः प्रशस्ता इति भावः ॥ ८३ ॥

तत्र लयसमत्वादीनां चतुर्णाम् अतिप्राशस्त्यं व्यनक्ति—

[4]आचार्याः सममिच्छन्ति पदच्छेदन्तु पण्डिताः।
स्त्रियो मधुरमिच्छन्ति विक्रुष्टमितरे जनाः ॥ ८४ ॥

**आचार्याः सममिति**—आचार्याः साङ्गवेदाऽध्यापकाः। तथा

---

१ दो यथास्वरम् छ० ॥ २ गुरुलघुत्वं ग० । लयसमर्थं छ० ॥ ३ का चातिरि० ॥
४ एतत्पद्यम् या० शि० व० ३४ मात्र प्राक् दृश्यते क्वातिरि० ॥

च मनुः—"उपनीय गुरुः शिष्यं वेदमध्यापयेद्द्विजः । सकल्पं सरहस्यं च तमाचार्यं प्रचक्षते" ( अ० २ श्लो० १४० ) इति । समं पाठमिच्छन्ति । "समं नाम आवापनिर्वापप्रदेशानाम्प्रत्यन्तरस्थानानाञ्चसमासः सममित्युच्यते" ( ना० शि० १।३।८ ) । पण्डिताः अर्थज्ञाः । पदच्छेदमिच्छन्ति । स्त्रियः मधुरमिच्छन्ति । इतरे आचार्यव्यतिरिक्ताः । नराः विकृष्टं पाठमिच्छन्ति । विकृष्टं नाम उच्चैरुच्चारितं व्यक्तपदाक्षरम्" ( ना० शि० १।३।६ ) इति । एतेन चतुर्विधपाठस्यातिप्राशस्त्यं बोधितम् अतः सर्वैः समादिगुणविशिष्टः पाठः करणीय इति शिक्षितम् ॥ ८४ ॥

द्विरुक्तपदस्य परस्य आम्रेडितत्वमाह—

## आवर्त्तते[2] पदं यच्च द्विस्त्रिराम्रेडितं हि तत् ।
## यथा च "धाम्ने धाम्ने" "यजुषे यजुषे"ऽपि[3] च॥८५॥

आवर्त्तते पदमिति । यच्च । द्विः द्व्यक्षरम् । त्रिः त्र्यक्षरं वा । पदम् । आवर्त्तते पुनरावृत्तं भवति । तत् पुनरावृत्तं परं पदम् । आम्रेडितम् आम्रेडितसंज्ञकम् । हि । ज्ञेयम् इति शेषः।तथा हि "सर्वस्य द्वे" ( पा० ८।१।१ ) इति पदद्वित्वे । "तस्य परमाम्रेडितम्" ( पा० ८।१।२ ) इति परस्य पदस्याऽऽम्रेडितसंज्ञा भवति । यथा च—"धाम्ने धाम्ने" इत्यत्र परस्य द्व्यक्षरस्य । च पुनः । "यजुषे यजुषे" (शु०य०सं० १।३०) इति त्र्यक्षरस्य । अपि च । परपदस्य आम्रेडितत्वम् इत्यर्थः । आम्रेडितकार्यमाह-"इवकाराम्रेडितायनेषु च" (शु० य० प्रा० ५।१८) इत्यवग्रहादि । यथा—"धाम्ने धाम्नऽइतिधाम्ने । धाम्ने" ( शु० य० प० १।३० ) इति । "यजुषेयजुषऽइति यजुषे । यजुषे" ( शु० य० प० १।३० ) इति । आचार्योऽप्युक्तवान् आम्रेडिते वर्त्तमानयोः यवयोः संस्पृष्टत्वाभावः ( या० शि० व० ५१-५२ ) इति ॥ ८५ ॥

पदक्रमसंहितयोर्वेष्टकस्थले इतिकारे चर्चायां च परे प्रतिषेधनाय

---

१ एतदेवलयसमत्वमित्युच्यते ।
२ "चतुरक्षरषट्कं च निवर्तेत पुनः पुनः ॥" इत्यर्द्धम् अधिकं पठितम् क, ख, छ० । घ० तु एतदपि नास्ति ॥ ३ ति ङाति० ॥

अन्तःपदविकाराऽऽगमलोपानामुपचारत्वमाह—

**हीयते वर्द्धते[2] वापि पदं यच्च[3] कृशोदरम् ।**
**उपचारः स विज्ञेयः 'उभेसुश्चन्द्रे[4]" दर्शनम् ॥८६॥**

हीयते इति । "विश्प्पतीवं" ( शु० य० प० ३३।४० ) इति । यत् । पदम् । हीयते क्षीयते । अपि । वा । "वर्नर्षदः" ( शु० य० प० ३३।१ ) इत्यादि । यत् । पदम् । च पुनः । वर्द्धते । आगमेन पूर्यते "वृष्टिमा २ँ॥ऽइव" ( शु० य० प० ७।३९ ) इत्यादि यत् । पदम् । कृशोदरम् रङ्गेण संकुचितमध्यम् । भवतीति शेषः । सः एष दीर्घ रेफागमोऽपधाऽऽनुनासिक्यादिविधिः । उपचारः उपचरितसंज्ञकः । विज्ञयः बोद्धव्यः । तत्र । "उभे सुश्चन्द्र" ( शु० य० सं०

---

१ यद्यपि शाखान्तरे "यथादिष्टं नामिपूर्वः पकारं सकारमन्योऽरिफितः ककारे। पकारे च प्रत्ययेऽन्तःपदं तु सर्वं त्रैवोपाचरितः स सन्धिः" ( ऋ० प्रा० ४।४१–६४ ) इति विसर्गसन्धेरेव उपाचरितत्वमुक्तम् । तथापि "नकारस्योष्मवदूष्टत्तं प्लुतोपाचरिते नतिः प्रश्लेषश्च प्रगृह्यस्य प्रकृत्याः स्युः परिग्रहे" ( ऋ० प्रा० १०।२० ) इत्युपाचरितवत् अन्येषामपि फलैक्यदर्शनादत्रोपचारसंज्ञा निर्दिष्टेति ज्ञेयम् ॥ २ चा क, ख० ॥ ३ त्र क, ख, ग, च० ॥ ४ न्द्रेति निद० व्याति० ॥ ५ "इवकाराम्रेडितायनेपु च" ( शु० य० प्रा० ५।१८ ) इत्यवग्रहे "पूर्वस्योत्तरसंहितस्य स्थितोपस्थितमवगृह्यस्य" ( शु० य० प्रा० ४।१८८ ) इति क्रमोक्तावृत्तिः पदेषु" ( शु० य० प्रा० ४।२१ ) इति "पदावृत्तौ चान्तरेण" ( शु० य० प्रा० ४।२० ) इत्यनेन इतिकारागमे "अनितावध्याये । इतिवर्चायाम्" ( शु० य० प्रा० ३।१६–२० ) इत्यन्तःपदविकारप्रतिषेधस्य अत्रधेर्बहिर्भूतत्वेन प्राप्त्यभावे "अनितावन्तर्विकारागमं प्रागुक्त्वा । विश्प्पतीवेति च" ( शु० य० प्रा० ४।२३-२४ ) इति सवर्णदीर्घयुतं पदं प्रथमं प्रोचार्य पश्चात् "विश्प्पतीत्रोपस्थिते" ( शु० य० प्रा० ४।८६ ) इति अन्तर्विकारं सवर्णदीर्घं विना वेष्टकः कार्यः । यथा—"विश्प्पतीव । विश्प्पतीऽइवेति विश्प्पती । इव" ( शु० य० प० ३३।४० ) इति । अत्र "विश्प्पतीवेति पदं सवर्णदीर्घेण क्षीणं ज्ञयम् । एवमुत्तरत्राप्यूह्यम् । विशेषस्तु तत्रतत्र निर्देक्ष्यते ॥ ६ अत्र वनशब्दः सदशब्दे प्रत्यये रेफेण व्यवधानाद् वृद्धः । तथाहि 'वनसदोऽवेटो रेफेण" ( शु० य० प्रा० ३।४६ ) इति ॥ ७ अत्र वृष्टिमान् शब्दः स्वरे परे "आकारोपधो यकारम्" ( शु० य० प्रा० ३।१४३ ) इति नकारस्य यत्वे "यवयोः पदान्तयोः स्वरमध्ये लोपः" ( शु० य० प्रा० ४।१२५ ) इति यलोपे "न परकालः पूर्वकाले पुनः" ( शु० य० प्रा० ३।४ ) इत्यनेन "कण्ठ्या-

१५।४३ ) इति । दर्शनम् उपलक्षणम् । भवतीति शेषः यथा—श्रेयं-'स्कर। श्रेयः करेति श्श्रेयं ÷। कर" ( शु० य० प० १०।२६ ) इत्यादि । एवं ह्याहुः "लोपागमविकाराश्च नैवेतिकरणे स्मृताः । अवग्रहस्तु चर्चायामितिना चोपदिश्यते" (शु० य० प्रा० भा० ३।२०) इति ॥८६॥

अथ उपचरितषत्वम् उदाहरति—

**प्रथमे न षकारेण सकारेणैव संयुतम् ।**
**एतत्स्वरं समासाद्य "अग्निष्वात्ता" निदर्शनम् ॥८७॥**

प्रथमे न षकारेणेति । प्रथमे आदौ । "स्वात्ता" इति पदम् । षकारेण । न । संयुतम् आसीदिति शेषः । किन्तु । सकारेण एव । संयुतम् । आसीदिति अत्रापि शेषः । एतत् अग्निपदस्थम् । स्वरम् इकारम् । उपलक्षणमेतत् । तथाहि—"भाविभ्यः सः षठ० समानपदे" ( शु० य० प्रा० ३।५६ ) इति भाविस्वरेभ्यः "अकराद्यो भावी" ( शु० य० प्रा० १.४६ ) इत्युक्तेभ्यः षत्वं दृश्यते । तेन भाविस्वरमित्यर्थः । समासाद्य समासेन कार्येण पूर्वतः प्राप्य । समानपदे इत्यर्थः । षकारेण संयुतं जातम् जानीयादिति शेषः । अत्र उपचरितषत्वकार्यं । अग्निष्वात्ताः ( शु० य० सं० १९।६१ ) इति । निदर्शनम् उपलक्षणम् । ज्ञेयम् । यथा "ष्वे । अग्निष्वात्ताः । अग्निस्वात्ताऽइत्यग्नि । स्वात्ताः" ( शु० य० प० १६।५८ ) इति । एवमन्यत्रापि उपचरितषत्वकार्यविशिष्टं पदं प्रागुक्त्वा पश्चात् प्रकृत्या वेष्टकं दर्शयेत् ॥ ८७ ॥

उपचरितषत्वनैमित्तकं कार्यं चोदाह्रियते—

**प्रथमे न ठकारेण थकारेणैव संयुतम् ।**
**एतत्स्वरं समासाद्य "अधिष्ठानं" निदर्शनम् ॥८८॥**

---

द्विवर्णं एकारम्" ( शु० य० प्रा० ४।५२ ) इति प्राप्तस्य निषेधे "अनुनासिकमुपधा प्रागन्तस्थायाः" ( शु० य० प्रा० ३।१३१ ) इत्युपधारञ्जने च कृते संकुचितः ॥ ८ अत्र "चन्द्रे सु शकारेण" ( शु० य० प्रा० ३।५४ ) इति शकारागमः ॥

१ अत्र विसर्जनीयः "ककारपकारयोः सकारम्" ( शु० य० प्रा० ३।२१ ) इति सकारविकारमापद्यते ॥

२ अत्र पद्यचतुष्टये । प्रथम मेव क, छ० । प्रथमेन इति तृतीयान्तस्वरूपं कृत्वा पठितम् ग०घ०। एतच्चतुष्टयी नास्ति च०। ग, घ०तु वज्रपिण्डानन्तरं धृता ॥ ३ ष ग०॥

**प्रथमे न ठकारेणेति**—प्रथमे पूर्वम् " स्थानमिति पदम् । ठकारेण । न । संयुतम् । आसीदिति सर्वत्र शेषः । किन्तु । थकारेणैव । संयुतमासीत् । एतद्द् भाविसंज्ञकम् । स्वरम् अधीत्युपसर्गान्त्यावयवमिकारम् । समासाद्य समासेन पूर्वतः प्राप्य । जातं षत्वंनिमित्तीकृत्यष्टुत्वेन ठकारसंयुतं भवति इति भावः । तत्र । "अधिष्ठानम्" इति निदर्शनम् । तथाहि—"अधिष्ठानम् । अधिस्थानमित्यधि । स्थानम् ( शु० य० प० १७।१७ ) इति पूर्ववत् ॥ ८८ ॥

अथ उपचरितणत्वापत्तिमाह—

**प्रथमे न णकारेण नकारेणैव संयुतम् ॥**
**एतदक्षरमासाद्य 'त्रिणवेति निदर्शनम् ॥ ८९ ॥**

**प्रथमे न णकारेणेति**—प्रथमे आदौ णकारेण । संयुतम् । 'नवेति पदं नासीत् । किन्तु । नकारेणैवासीत् (शु० य०सं० १०।१४) एतदक्षरमासाद्य 'त्रिशब्दान्तर्गतं स्वर व्यवहितं रेफाक्षरं समासविधिना पूर्वतः प्राप्य । णकारयुतं जातम् । तथा हि "ऋवरेभ्यो नकारो णकारठं समानपदे । स्वर-य-व-ह-क-पैश्च" (शु० य० प्रा० ३।८५–८६) इति । अत्र । " त्रिणव " ( शु० य० सं० १०।१४ ) इति । निदर्शनम् । तथा हि—त्रिणवत्रयस्त्रिंशौ । त्रिनवत्रयस्त्रिंशावितित्रिनवत्रयस्त्रिंशौ ( शु० य० प० १०।१४ ) इति पूर्ववत् ॥ ८९ ॥

उपचरितोपधाऽनुनासिक्यं चाह—

**प्रथमे नैव रङ्गेण नकारेण च संयुतम् ।**
**एतद्रञ्जितमासाद्य ' वृष्टिमाँ॥ऽइव" दर्शनम् ॥ ९० ॥**

**प्रथमे नैवेति**—वृष्टिमानिति पदम् । प्रथमे सन्धितः

---

१ त्स्वरं स ज्ञाति० ॥ २ अस्याग्रे " प्रथमस्थथकारेण तकारेण च संयुतम् । एतदक्षरमासाद्य त्रिष्टभेति निदर्शनम्" इति अधिकं दृश्यते घ० ॥

पूर्वम् । रङ्गेण अर्धानुस्वारेण संयुतम् । न । किन्तु । नकारेणैव संयुतम् । आसीदिति शेषः । एतद्रङ्गितमासाद्य उपधानुनासिक्यरूपे नकारविकारे जाते रङ्गयुतं जातम् इति भावः । अत्र " वृष्टिमा ३ँ॥ऽइव" । ( शु० य० सं० ७।४० ) इति । दर्शनम् उदाहरणम् । तथा हि— " वृष्टिमान् + इवेत्यत्र " " आकारोपधो यकारम् " ( शु० य० प्रा० ३।१४३ ) इति नकारस्य यकारे । उपधायाः "अनुनासिकमुपधा प्रागन्तस्थायाः" ( शु० य० प्रा० ३।१३१ ) इति अनुनासिक्ये च । ततः " यवयोः पदान्तयोः स्वरमध्ये लोपः " । ( शु० य० प्रा० ४।१२५ इति यलोपे कृते, " न परकालः पूर्वकाले पुनः" । ( शु० य० प्रा० ३।४ ) इति सन्धिनिषेधे च वृष्टिमा ३ँ॥ऽइवेति भवति । यथा—"व्रुष्टिमा३ँ॥ऽइंव । व्रुष्टिमानिवेतिंवृष्टिमान् । इंव" ( शु० य० प्रा० ७।३६ ) इति पूर्ववत् ॥ ९० ॥

इति श्रीयोगिवरयाज्ञवल्क्यमहर्षिप्रोक्तायां शिक्षायां वर्णप्रकरणे दीक्षितामरनाथशास्त्रिकृतायां शिक्षावल्ल्याख्यायांविवृतौ पदाधिकारः



# अथ प्रकीर्णकानि ।

तत्र पदे व्यञ्जनानां संयोगविशेषादुच्चारणविशेषानाह—

**अथ सप्तविधाः संयोगपिण्डाः—अयःपिण्डो[1] दारुपिण्ड ऊर्णापिण्डो ज्वालापिण्डो मृत्पिण्डो वायुपिण्डो वज्रपिण्डश्चेति[2] ॥**

**अथ सप्तेति**—अथ पदवैशेष्यबोधनानन्तरम् । सप्तविधाः । संयोगपिण्डाः स्वराऽव्यवहिताऽनेकव्यञ्जनयुतानि पदानि । भवन्ति इति शेषः । १ अयःपिण्डः । २ दारुपिण्डः । ३ ऊर्णापिण्डः । ४ ज्वालापिण्डः । ५ मृत्पिण्डः । ६ वायुपिण्डः । ७ वज्रपिण्डः । इति नामतः इत्यर्थः ॥

तत्र अयःपिण्डानाह—

**यमान् विद्यादयःपिण्डान्** ... ... ....

**यमानिति**—यमान् "अपञ्चमैश्चैकपदे संयुक्तं पञ्चमाक्षरम् । उत्पद्यते यमस्तत्र ( या० शि० व० प्र०) इति लक्षिष्यमाणान् वर्णान् । अयसः लोहस्य पिण्डा इव पिण्डा येषां ते तथोक्ताः तान् । विद्यात् जानीयात् । यमेषु तथा विच्छेदः कर्तव्यो यथा—लोहपिण्डाः प्रतिखण्डं परस्परसंश्लिष्टावयवाः उच्छिद्यन्ते । यथा—"रुक्क्मः" ( शु० य० सं० १२।१ ) इत्यत्र 'रुक्कूँ इति संयोगादिककारस्य पूर्वाङ्गत्वेन रेफोत्तरोकारेण सहोच्चारणात् यदा मकाराद्विच्छेदः क्रियते तदा ककारमकारयोः मध्यवर्त्ती यमः मकारगुणोऽनुनासिकः ककारप्रतिसंख्यकः तेन सहैवोच्छिद्यतेऽतोऽस्याऽयःपिण्डतेति भावः । अत्र यमस्य उत्पत्तिकालिकपूर्वककारात् पार्थक्येन श्रवणाभावात् । तेन सह सम्यक् श्लेषात् संश्लिष्टतेत्यर्थः । अत्र यमग्रहणेन अपञ्चमाः स्पर्शा उपलक्ष्यन्ते । तथाहि—

---

१ यस् ग० ॥ २ श्चेति सप्तविधाः पिण्डाः घ० ॥

"वषट्कृतमित्यादौ यथायस्पिण्डादीनामाश्लेषः तथैतेषां व्यञ्जनानामिति" शु० य० प्रा० ४.१६३ सूत्रे उव्वटाचार्याः ॥

दारुपिण्डानाह—

.... .... सान्तस्थान् दारुपिण्डकान् ॥

सान्तस्थेति । अन्तस्थैः यरलवैः सहितान् संयोगपिण्डान् । दारोः काष्ठस्येव पिण्डो येषां तान् तथाविधान् जानीयात् । अन्तस्थसंयुक्तेषु पिण्डेषु तथा वर्णच्छेदो यथा काष्ठावयवाः शिथिलं श्लिष्टा विच्छिद्यन्ते । यथा—"ग्विल्म्मिले" ( शु० य० सं० १६।३५ ) इत्यत्र विकारेण सह लकारस्य संयोगादित्वात्, पूर्वमकारस्य च क्रमजत्वात् "ग्मिल्म्" इत्युच्चारिते लकारात्पृथक् भिन्नस्थानकरणक पूर्वमकारस्य मुखधारणात् ( ओष्ठयोः अर्धमात्रां यावत् अविच्छेदेन धारणादित्यर्थः ) ईषत् श्रुतेः शिथिलश्लेषः अतो दारुपिण्डता ॥

ऊर्णापिण्डमाह—

अन्तस्थंयमवर्जं तमूर्णापिण्डं विनिर्दिशेत ॥ ९१ ॥

अन्तस्थयमेति । अन्तस्थयमवर्जम् स्पर्शान्तस्थरहितम् । तम् ऊष्मसंयोगपिण्डम् । ऊर्णानाम् अजाऽविप्रभृतिलोमानाम् । पिण्ड इव पिण्डो यस्य तम् तथोक्तम् । विनिर्दिशेत् जानीयात् ॥ अन्तस्थयमाभ्याम्भिन्नैरुष्मभिः संयोगे तथा विच्छेदः कार्यो यथा ऊर्णापिण्डावयवाः श्लथबन्धाः न पुनः परस्परं श्लिष्टा भवन्ति । यथा—पाशैस्तमन्या, इत्यत्र शैकारेण सह सकारस्य संयोगादित्वात् तकारस्य क्रमजत्वात् । द्वितीयतकारस्य यमत्वाच्च "पाशैस्त्तँ मन्या" इत्थमुच्चारिते सकार-तकारयोः पृथक् श्रुतिः । द्वितीयतकारस्य यमत्वात् न पृथक् श्रुतिः । अत्राहुः द्वितीयतकारस्योष्मसंयोगात् न यमत्वम् । तेनास्योत्तराङ्गताऽपि विच्छेदाभावात् । यमो विच्छेद इत्यनर्थान्तम् । अत एवास्य पृथक् श्रुतिः । न संश्लिष्टता । तथा चोक्तम् "यमास्तदा निवर्त्तन्ते ऊष्मा मध्ये भवेद्यदि । ऊर्णापिण्डेन ते तुल्याः 'पाशैस्तमन्या'निदर्शनम्" ( व० र० प्र० शि०

---

१ स्थं क, ग, घ० । स्था च, छ० ॥ २ तु ऊर्णा चाति० ॥

१७७-१७८ ) (१) इति । केचित् ॥ ६१ ॥

अन्तस्थयमसंयोगे 'समार्ज्जिम' इत्यादौऽतु दारुपिण्डतैवेत्याह—

**अन्तस्थयमसंयोगे विशेषो नोपलभ्यते ॥**
**अशरीरं यमं विद्यादन्तस्थं पिण्डनायकम् ॥ ९२ ॥**

अन्तस्थेति—यस्मिन्पिण्डेऽन्तस्थयमाभ्यां संयोगस्तत्रोक्ता-तिरिक्तः कश्चिद्विशेषो नास्ति । यतः । यमस्याशरीरित्वादन्तस्थस्य च प्रत्यक्षश्रुतेः प्राधान्यात् । तत्र दारुपिण्डतैव(२) ॥ ९२ ॥

---

१ वस्तुतस्तु "पाशैस्त्मन्येत्यत्र यमनिवर्त्तनोक्तिश्चिन्त्या । तकारयमयोरयः पिण्डता निर्बाधैव । ऊष्मणो यमनिवर्त्तकत्वोक्तिः पञ्चमाक्षरविषया " शु० य० प्रा० ४।१६२ " सूत्रस्थ भाष्यानुरोधात् । तेन अस्म्मिन् । कृष्ण्णः इत्यादयः ऊर्णापिण्डा ज्ञेयाः । अतोष्म-यमसंयोगे "पाशैस्त्मन्यादौ [ "पञ्चमाः शषसैर्युक्ता" ( या० शि० व० ) इति पञ्चमा-नामूष्मयोगे यमप्रतिषेधस्य अत्राऽपञ्चमव्यवधानेनाऽप्रवृत्तेः यमसम्भवात् ] यमस्याऽशरी-रित्वेनाऽन्तर्धानादूष्मणः एव प्राधान्यादूर्णापिण्डताऽविरुद्धा । वक्ष्यमाणाऽन्तस्थ–यम-संयोगवत् । विशेषाऽनुपलब्धेः । ऊर्णापिण्डे ऊष्मप्राधान्यादेव "अयस्पिण्डेन तत्तुल्यम्" इति । "स्ववर्गीयैस्तु संयोगः स्पर्शानां सम्भवेद् यदि । तत्पूर्वस्य श्रुतिर्नास्ति" (व० र० प्र० शि० १८६-१८७ ) इति च यमत्वविरहेऽपि निरूष्मस्पर्शसंयोगे संगच्छते । तत्रायं विवेकः—यमत्वे परस्याऽश्रुतिः । यमत्वाऽभावे अभिनिधानेन पूर्वस्याऽश्रुतिः । यमत्वेऽपि "द्वितीयाश्च चतुर्थाश्च वर्णाः सोष्माण एव हि । यदैते पञ्चमैर्युक्ता वायुः सम्यगृते मुखात् ॥ तं धारयेत्प्रयत्नेन घनबन्धं ( अयस्पिण्डतुल्य ) समुच्चरेत् । सक्थ्ना दद्ध्मस्तथा दद्घ्ना अघ्न्या इति निदर्शनम्" ( व० र० प्र० शि० १८९–१९० ) इति विशेषो द्रष्टव्यः ॥

२ अत्रेत्थं विवेकः । यस्य स्पर्शस्योच्चारणान्तेऽन्यस्य तत्र समसंख्यस्पर्शस्यो-च्चारणप्राप्तिः तत्राऽयःपिण्डता । यत्र " सम्म्यगित्यादौ द्वितीयमकारस्य स्पृष्टप्रयत्न-वतो वर्णस्योच्चारणान्ते ईषत्स्पृष्टोच्चारणप्राप्तिः तत्र । अथवा वैपरीत्येनापि यत्र "विल्मिन इत्यादौ ईषत्प्रयत्नभेदः तत्र दारुपिण्डता। एवमूष्माऽन्तस्थसंयोगेऽदश्वइत्यादा-वपि । यत्रपुनः स्पर्शोष्मसंयोगेऽस्मिन्नित्यादौ पूर्णः प्रयत्नभेदः तत्रोर्णापिण्डता । अत एवाऽन्तस्थरेफोच्चारणसमनन्तरमेव प्रथमजकारोच्चारणे दारुपिण्डतैव । ईषत्स्पृष्टो-च्चारणान्ते स्पृष्टोच्चारितत्वात् । ततो यमस्य द्वितीयजकारप्रतिरूपकस्य प्रथमजकार-समसंख्यकत्वेन उच्चारणे नासिकयोरेवाऽन्तर्लीनत्वम् । इयमेवाऽशरीरिता यमस्य । अतो नास्य प्रत्यक्षा श्रुतिः । इदमेव चास्यायोगवाहत्वम् । तेनैव च यमस्य पूर्वाक्षरेण संश्लिष्टतया अयःपिण्डता । इति प्रागुक्तपिण्डेभ्यो नास्ति वैशेष्यम् । परम् अत्र प्राधान्याद्दारुपिण्डव्यवहार एवेति दिक् ॥

अथोष्मस्पर्शसंयोगे पूर्णप्रयत्नभेदात् ऊर्णापिण्डतोक्तेरूष्मयम-संयोगेऽपि यद्यपि विशेषो नास्ति ऊष्मप्राधान्यात् तत्रोर्णापिण्डव्यव-हारोऽविरुद्धः । तथापि क्वचित् "वह्निरित्यादौ ऊष्मविशेषेण स्पर्शविशेषसंयोगे वैशेष्यं वक्तुं ज्वालापिण्डानाह—

## ज्वालापिण्डान् सनासिक्यान्....

ज्वालापिण्डेति । सनासिक्यान् नासिक्यैः पञ्चमैः सहि-तान् । हकारयोगपिण्डान् इति शेषः । ज्वालापिण्डान् । विद्यादि-ति शेषः । यथा—वह्निः । ब्रह्म । इत्यादौ तत्तत्स्थानकरणाभ्याम् उत्पत्तिकाले यथाक्रमम् ह-नासिक्ययोः उत्पन्नयोरपि हकारनिष्ठस्यो-ष्मणः नासिक्याऽनुनादाऽभिघातेन ( कस्यचित् वस्तुनः पूर्ववर्त्तिन्याः तत्संयोगात् परत्र गमनम् ज्वालाया इव ) हकारात्परस्य नासिक्य-वर्णस्य हकारश्रुतेः प्राक् श्रुतिः । इति ज्वालापिण्डता ।

मृत्पिण्डानाह—

## ...सानुस्वारांस्तु मृण्मयान् ॥

सानुस्वारानिति । अत्राऽनुस्वारशब्देन उभयविधो ग्राह्यः । तेन अनुनासिक्यविशिष्टान् पूर्णानुस्वारविशिष्टांश्च पिण्डान् । मृत्पि-ण्डान् मृदो मृत्तिकायाः पिण्ड इव पिण्डो येषु तान् । विद्यादिति शेषः यथा—त्रिंशो । यामैरयँश्चन्द्रमसि । लोकाँ२॥ऽअकल्पयन् । शत्रूँ२॥रप । इत्यादौ यथा मृत्पिण्डे क्वचित् ग्रन्थिर्मध्ये दृश्यते तथा उभयविधानुस्वारयोरपि ग्रन्थिरिव मध्ये विभिन्नश्रुतिकत्वात् मृत्पिण्डता बोध्या ॥

वायुपिण्डानाह—

## सोपध्मानान् वायुपिण्डान्....

सोपध्मानानिति । उपध्मायत अनेन इत्युपध्मानो वायुः, तेन सहितान् । पवर्गात् पूर्वत्र ऊष्मणः उच्चारणे वायुर्ध्मायते गम्भीर-ध्वनिर्भवति अतो ये ये सोपध्मानाः " द्यौष्पितादयः, तान् । वायुपि-ण्डान् । विद्यादिति शेषः ॥ एवं पकारात् पूर्वस्य विसर्जनीयस्यापि । यथा-देवसवितः प्प्रसुवेत्यादौ । उपध्मानीयस्य पारिभाषिकस्य

"ᳶप" इत्यस्य तु माध्यन्दिनानां प्रतिषिद्धत्वादभावः। अन्यत्र लोके-चास्यापि वायुपिण्डता तुल्यैवेति दिक् ॥

वज्रपिण्डानाह—

## जिह्वामूले तु वज्रिणः ॥ ९३ ॥

जिह्वामूले त्विति। जिह्वामूले जिह्वामूलीयोष्मणि तु। तुकारेण सोपध्मानव्यतिरेकः। तेन कवर्गात् पूर्वस्य ऊष्मणः उच्चारणे जिह्वामूलीयत्वात् इष्कृतिरित्यादौ । वज्राः सन्ति येषु पिण्डेषु तान् वज्रिणः। विद्यादिति शेषः। यथा वज्रः प्रक्षिप्तः शत्रुमाश्लिष्य तिष्ठति एवमत्र षकारस्य खकारोच्चारणेन जिह्वामूलीयत्वादग्रिमेण ककारेणात्यन्तसंश्लिष्टा श्रुतिः श्रूयते ककारस्यापि जिह्वामूलीयत्वात् । उभयत्र स्थानकरणयोरैक्यात् इति यावत् ॥ एवम् "दिवः ककुदित्यादौ कण्ठ्यस्यापि विसर्गस्य जिह्वामूलीयकवर्गयोगेन स्थानकरणयोः

---

१ तथाहि—"अथो मूर्धन्योष्मणोऽसंयुक्तस्य, टुमृते संयुक्तस्य च खकारोच्चारणम्" २।७ इति। अस्यार्थः अथो अन्तस्थादेशोपदेशानन्तरम् । मूर्धन्योष्मणः षकारस्य । खकारोच्चारणम् स्थानकरणपरित्यागेन कवर्गप्रतिरूपकं खकारं वदेत्। किं सर्वत्र इत्याकाङ्क्षायां विशिनष्टि असंयुक्तस्य। यथा—"इषेत्वा" ( शु० य० सं० १।१ ) इत्यत्र खकारोच्चारणम्। च पुनः। टुम् ऋते संयुक्तस्य टवर्गान्यहल्भिर्युतस्य । यथा — "शष्प्यायच" ( शु. य. सं. १६-४२ ) इत्यत्र खकारोच्चारणम्। टवर्गयोगे तु—"कृष्णो स्याखरेष्ठो (शु० य० सं० २।१) इत्यत्र न खकारोच्चारणम्। किंतु षकारोच्चारणमेव। अत्र विशेषः "असंयुक्तस्य मूर्धन्यो-ष्मणः खोच्चारणं मतम्। टुमृते संयुक्तस्यापि कस्य-योगे ष एव हि ॥ छन्दसीत्येव खोच्चारो लोके प्रकृतिरिष्यते"। ( के० प० शि० १४-१५ ) इति ॥ ककारयोगोऽत्र आदिभूतो विवक्षितः नतु षकारात् परत्र। यथा - "क्षत्रस्य" ( शु० य० सं० २०१ ) इत्यत्र षकारादादौ ककारयोगे सति न खोच्चारः। किन्त्वत्र 'क्षत्रस्य' इत्थमेवोच्चारः। 'क-ष संयोगे क्षः" इति तु लिप्यनुशासनेन क-ष योगात् 'क्ष' इत्याकारा लिपिः कर्त्तव्येति बोध्यते। न पुनर्वर्णान्तरबोधको विधिरयम्। अस्य शब्दानुशासनेऽदृष्टत्वात्। श्रुतिवैलक्षण्यं तु स्वाभाविकम् नवर्णान्तरप्रयुक्तमिति दिक्। "शुष्क्यायच" ( शु० य० सं० १६।४५ ) इत्यत्र तु षकारात्परत्र ककारयोगात् भवत्येव खोच्चारः। एतदुच्चारणम् वेदपाठे ज्ञेयम्। अर्थवेलायां तु प्रकृत्या ॥

२ "ऋᳵकौ जिह्वामूले" ( शु० य० प्रा० १।६५ ) इति ॥

३ "जिह्वामूलीयाऽनुस्वारा हनुमूलेन" ( शु० य० प्रा० १।८३ ) इति ॥

४ "अहविसर्जनीयाः कण्ठे"। "कण्ठ्या ( हन्वोरेव ) मध्येन" ( शु० य० प्रा० १।७१,८४ ) इति ॥

सांनिध्यात् वज्रपिण्डताऽविरुद्धा। पारिभाषिकस्य "ꣳक" इत्यस्य जिह्वामूलीयस्य तु माध्यन्दिनानां प्रतिषिद्धत्वादभावः। लोकेऽन्यत्रापि अस्य वज्रिता तुल्यैवेति दिक्॥ ६३॥

[ (१) अयः पिण्डो यथा–अग्निः (शु० य० सं २३।१७) पत्क्नीः (शु० य० सं० २७।२०) तनच्मि (शु० सं० व० १।४) यक्क्ना (शु० य० सं० ३९।८) इति॥ दारुपिण्डो यथा–अश्र्वं÷ (शु० य० सं० २४।१) सूर्य्यः (शु० य० सं० ३।९) विल्ल्मनें (शु० य० सं० १६।३६) विश्वजनस्यं (शु० य० सं० ५।२८) वीर्य्यम् (शु० य० सं० १९।९) इति॥ ऊर्णापिण्डो यथा–अश्स्मंन् (शु० य० सं० १७।१) कृष्ण्णं÷ (शु० य० सं० २।१) अमुष्म्मिन् (शु० य० सं० १७।२) आस्म्मिन् (शु० य० सं० ३।१) कुक्कुटः (२) (शु० य० सं० १।१६) इति॥ ज्वालापिण्डो यथा–ब्रह्मं (शु० य० सं० १३।३) वह्निंतमम् (शु० य० प० १।८) गृह्णामि (शु० य० प० ९।२) इति। मृत्पिण्डो यथा–ताꣳ सवितुः (शु० य० सं० १७।७४) सꣳस्थाम् (शु० य० (सं० १९।२९) लोकाँ॥ऽअकल्पयन् (शु० य० सं० ३१।१३) यामैरयँश्चन्द्रमासि (शु० य० सं० १।२८) इति॥ वायुपिण्डो यथा–देवं सवितः प्प्रसुव (शु० य० सं० ९।१) द्यौष्प्पिता (शु० य० सं० २।११) याः

---

१ एष कोष्ठान्तर्गतः पाठो टिप्पणीभूतः केनचित् मूले प्रक्षिप्तः इति भाति व्याख्यातपूर्वश्च या० शि० पृ० १४४–१४८॥

२ एष पाठोऽधिकः ग, च०। सच विरुद्धः। स्पर्शं संयोगेऽयस्पिण्डत्वोक्तेः॥

फलिनीः ( शु० य० सं० १२।२९ ) इति । वज्रपिण्डो यथा–ऋक्क्सामयोः ( शु० य० सं० ४।९ ) इष्क्कृतिः ( शु० य० सं० १२।८३ ) दिवः ककुत् ( शु० य० सं० ३।१२ ) इति ॥ ]

ननु स्वराणां नानादेवत्यत्वं प्राक् ( पृ० ७७ ) उक्तम् स्पर्शादीनां तुवक्तव्यम् इति स्पर्शादीन् अनूद्य तेषां दैवतान्याह—

एते[1] ककारादयो मकारावसानाः कृष्णाः पंचविंशतिः स्पर्शाः व्याख्याताः–शनैश्चरदेवत्याः । चत्वारो[2]ऽन्तस्था यरलवाः कपिलवर्णा अग्निदेवत्याः । चत्वार[3] ऊष्माणः शषसहा अरुणवर्णा आदित्यदेवत्याः । एवं[4] त्रयस्त्रिंशद्व्यञ्जनानीति[5] ।

व्याख्यातं चैतत् प्राक् ( पृ० ७६ ) ॥

अथ संयोगपिण्डविशेषे संज्ञाभेदहेतूनि करण स्थानानि भवन्ति । तत्र प्रथमोपस्थितत्वेन आदौकरणानि ( आभ्यन्तरप्रयत्नान् ) आह—

चतुर्विधं[6] करणम् स्पृष्ट-मस्पृष्टं संवृतं विवृतञ्चेति ॥ क ॥ स्पृष्टाः स्पर्शाः ॥ ख ॥ अस्पृष्टा

१ नास्ति ग, च० अत्र ८७–९० इति पद्य चतुष्टयीं प्रदर्श्य" ककारादयो" इतिपाठो धृतः ग, घ० ॥ २ र्या क, ख० ॥ ३ त्वार्यूष्मा क, ख० ॥ ४ नास्ति क, ख, ग० ॥ ५ निस्पर्शान्तस्थोष्माणश्चेति इत्यधिको दृश्यते ग, घ० ॥

६ ‘षड्विधमास्यप्रयत्नम् । संवृतं विवृत-मस्पृष्टं स्पृष्ट-मीषत्स्पृष्टं चार्धस्पृष्टं चेति । तत्र । अकारः संवृतो ज्ञेय इतरे विवृताः स्वराः । सर्वे च ते स्युरस्पृष्टाः स्पर्शाः स्पृष्टा भवन्ति हि ॥ ईषत्स्पृष्टास्तथाऽन्तस्था ऊष्माणोऽर्द्धस्पृशः स्मृताः । सामान्य भजते वर्गः सस्थानकरणस्य हि ॥ ऋलोर्मध्ये भवत्यर्धमात्रा रेफलकारयोः । तस्मादस्पृष्टता न स्याद्लृकारनिरूपणे ॥ वर्गाणां प्रथमा द्वितीयाः शषसाश्चाऽघोषाः । घोषास्त्वन्ये " एष पाठः “ चतुर्विधं...शषसाश्चेति " इत्यस्य स्थाने दृश्यते ग, च० । घ० तु श्लोकरहितः एतत्समानः पाठः । सच प्रकृतानुपकृतत्वादुपेक्षितः ॥

अन्ये ॥ ग ॥ संवृता घोषाः ॥ घ ॥ विवृता अघोषाः ॥ ङ ॥ विंꣳशतिर्घोषास्ते गजडदबा घझढधभा ङञणनमा यरलवा हकारश्चेति ॥ च ॥ त्रयोदशाऽघोषास्ते कचटतपा खछठथफा शषसाश्चेति ॥ छ ॥

चतुर्विधमिति ।–करणम् क्रियते इति व्युत्पत्या वर्णोच्चारप्रयत्नः। चतुर्विधम् चतुः प्रकारः। स्पृष्टेत्यादिभेदात् ॥ क ॥ तत्र स्पर्शव्यञ्जनोत्पत्तौ तत्तज्जिह्वाग्रादिना करणेन तत्तत्स्थानानां स्पर्शात् स्पृष्टाः स्पर्शा इति ॥ ख ॥ वर्णोत्पत्त्यधिकरणभूतस्थानानां सम्यक्स्पर्शं विना तत्तत्करणैर्जिह्वाग्रादिभिरुच्चारणादन्तस्थानाम् ऊष्मणाञ्चास्पृष्टता इत्याह–अस्पृष्टा अन्ये इति। तथा हि–"अचोऽस्पृष्टा यणस्त्वीषन्नेमस्पृष्टाः शरः स्मृताः। शेषाः स्पृष्टा हलः प्रोक्ता" ( पा० ३८ ) इति। यद्यपि अन्तस्थानाम् ईषत्स्पृष्टता ऊष्मणां च नेमस्पृष्टता विहिता। तथापि सम्यक्स्पर्शाभावेनाऽस्पृष्टता तेष्वपि संगतैव ॥ ग ॥ घोषाऽनुप्रदानाः संवृता ज्ञेया इति शेषः ॥ घ ॥ अघोषाऽनुप्रदानाः विवृताः। ज्ञेयाः ॥ ङ ॥ के ? पुनः घोषादयः इत्याह—येषां वर्णानामुच्चारणे वायोराधिक्यात् नादेषन्नादौ श्रूयेते ते गजडदबादयो विंशतिसंख्याका घोषा भवन्तीति शेषः ॥ कचटतपादीनां त्रयोदशसंख्याकानाम्। उच्चारणे वायोरल्पतया नादेषन्नादौ न श्रूयेते किन्तु श्वासोच्छ्वासौ श्रूयेते अतस्ते अघोषाः भवन्ति इति शेषः। तथा हि "निघोषाऽनुप्रदानतः ॥ अमोऽनुनासिका नह्रौ नादिनो

---

१ संवृतत्वं नाम–जिह्वाग्रोपाग्रमध्यमूलादीनां तत्तद्वर्णकरणानां तत्तद्वर्णोत्पत्तिस्थान समीपावस्थानम्। दूरेऽवस्थानमेव विवृतत्वम्। इति आभ्यन्तरप्रयत्नाभिप्रायेणोक्तवान् तत्वबोधिनीकारः सि० कौ० १० तुल्यास्येतिसूत्रे। बाह्ये तु कण्ठविवरस्य संवरणेन संवृतता। विकाशेन च विवृतता इति च प्रोक्तवान् तत्रैव। आभ्यन्तरत्वमेतेषां स्पृष्टादीनां वर्णोत्पत्तेरव्यवहितप्राग्भावित्वम् बोध्यम्। बाह्यत्वं च संवारादीनां वर्णोत्पत्तेः पश्चाद् भावित्वेन ज्ञेयम्। अत एव एतेऽनुप्रदानत्वेनोक्ताः ( पा० शि० ३८–४० ) पाणिनिना ॥

**नव ओष्ठ्या इति**—नवेति संख्यानं पूर्ववत्। एते वर्णाः ओष्ठस्थाने ओष्ठकरणेन उत्पद्यन्ते। वकारस्य तु ओष्ठस्थाने दन्तैः करणैरुत्पत्तिर्बोध्या। अत एव "दन्त्योष्ठ्यो वः स्मृतो बुधैः" (पा. शि० १८) इति पाणिनिशिक्षा दन्तानां करणरूपाणां लाघवात् स्थानत्वेन निर्दिशन्ती अविरुद्धैव। स्थानं त्वस्य ओष्ठमेवेति दिक्। ओकारेण औकारस्य अपि संग्रहः। अनयोर्वैशेष्यं प्राक् (पृ० ६०) व्याख्यातम् ॥ ठ ॥

## एको दन्तमूलीयो रेफः ॥ ढ ॥

**एको दन्तेति**—रेफो दन्तमूले जिह्वाग्रस्पर्शेन उत्पद्यते इत्यपि संभवाभिप्रायेण प्रातिशाख्यदिशा उक्तम्। वस्तुतो जिह्वामध्यकरणेन मूर्धस्थानोक्तिः पाणिन्यादिसंमता रेफस्य न विरुध्यते। यतो जिह्वाग्रेण दन्तमूले ईषत्स्पृष्टे अर्थादेव जिह्वामध्यस्य मूर्धनि स्थितिरिति करणभेदस्तु पाणिनेरपिग्राह्यः ॥ ढ ॥

## सप्त जिह्वामूलीयाः— ऋ ॠ ऋ३ इत्यृवर्णः ᳵ क क ख ग घ ङ इति ॥ त ॥

**सप्त जिह्वेति**—सप्तेति जात्याख्यानं पूर्ववत्। एते नव वर्णा जिह्वाया मूलभागे हनुमूलेन करणेन उत्पद्यन्ते। अत्र ऋवर्णस्य जिह्वामूलीयत्वमपि पाणिनीयस्य मूर्धन्योक्त्याऽविरुद्धमेव। मूर्धन्यपटवर्गाभ्यामस्य करणविशेषप्रदर्शनायात्रोक्तिः। न तु स्थानद्वयेन द्विविधऋवर्णोत्पत्तिः प्रतिपत्तव्या। पाणिनिना तु प्रक्रियालाघवायास्य मूर्धन्यता स्वीकृता रेफइवेति। त ॥

## चत्वारो यमाः—कुँ खुँ गुँ घुँ इति ॥ थ ॥

**चत्वार इति**—उकारः सादृश्यार्थः। सादृश्यं च वर्गाद्यत्वादिना ग्राह्यम्। अर्धचन्द्रेण च आनुनासिक्यं द्योत्यते। तेन आनुनासिक्यगुणविशिष्टाः वर्गप्रथमाः वर्गद्वितीयाः वर्गतृतीयाः वर्गचतुर्थाः। इति इत्थम्। चत्वारः चतुर्विधाः। यमाः। भवन्ति इति

---

१ जिह्वा··याः पञ्च कुं खुं गुं घुं ङुं इति क, ख०। पञ्च जि··याः ऋ ᳵ कौ कवर्गं इति ग, घ० ॥

२ क्म-ख्म-ग्म-घ्म कुँ खुँ गुँ घुँ इति यमाश्चत्वारः क, ख० ॥

शेषः। तथा हि—नासिकामूलकरणेनाधिकेन संस्कृतो वायुः नासिकासहकृते स्वस्ववर्गीयस्थाने(१) यमाऽभिख्यां भजते। अत एव वर्गपञ्चमात् हुँ इति नासिक्यात् अनुनासिकाच्च यमानां पार्थक्यम्। ते हि समानस्थानकरणाः ( शु० य० प्रा० १।८० )। यमास्तु नासिकामूलमात्रकरणाः ( शु० य० प्रा० १।८२ )। अयमाशयः—"रुक्क्मः" इत्यादौ "रुक् इति ककारादिकमुच्चरितुं जायमानो यत्नः संयोगादिरुकारादिकमुच्चार्य नासिकामूले विच्छिन्नः पुनस्तत्र तत्सजातीयम् आनुनासिक्यम् अपरम् उच्चारयितुं प्रवृत्तः ककारादिसदृशीं स्पष्टां श्रुतिम् अनुत्पादयन् अपि नासिकायां तत्तत् स्थाने च विधृत एव मात्राविलम्बितः(२) सन् नासिक्यगुणविशिष्टः ककाराद्यनुप्रदानादिप्रयुक्तधर्मवैशिष्ट्येन कँ खँ गँ घँ (३) इत्यन्यतमसदृशः यमः ( मुखधारणया विच्छेदरूपः ) न तु तथैव उच्चारितः भवति। अत एव यमानाम् अशरीरित्वमुपपद्यते। वर्णस्वरूपाभावादेव अक्षरसमाम्नाये अयुक्ता इत्ययोगाः मुखस्थश्रुतिविरोधात्मलाभवाहनाच्च वाहाः। अयोगाश्च ते वाहाः अयोगवाहाः इत्यन्वर्थसंज्ञा यमानां पाणिन्यादिभिः प्रतिपादिता विसर्गादिवत् इति ॥ घ ॥

---

( १ ) तथाहि "नासिक्यास्तावत्तत्वे एव यमाः ऋ० प्रा० १।४८ उक्ताः। द्वितीय तु प्रकृत्याश्रयं यत्स्थानं तदर्थम् इदमुच्यते-ऋ० प्रा० १।३८ इत्यत आरभ्य यानि स्थानान्युक्तानि एषु स्थानेषु यमानां स्थानोपदेशः ऋ० प्रा० १।५० इति। तत्र भवत् यथान्तरं भवति। ककारादिसरूपो यम इति। यमः प्रकृत्यैव सदृक्" ऋ० प्रा० ६।३२ इति सूत्रे वक्ष्यति। एवं विंशतिर्यमाः बह्वृचानां भवन्ति। स्वरूपैश्चत्वार एव इति ऋ० प्रा० सूत्रयोः ६।२६,३४, भाष्ये उव्वटाचार्याः। शु० य० प्रा० ८।१४ सूत्रभाष्ये च प्राहुः।

( २ ) "श्रुतिर्वा यमेन मुख्यास्ति समकाला" ( ऋ०प्रा० ६।३३ ) इति। यद्यपि अर्धमात्रिकः कालः प्राप्नोति। तथापि अस्याः शाखायाः दीर्घपाठात् एकमात्रिकोविलम्बः सूक्तः।

( ३ ) तथाहि वैदिकाः 'लक्ष्मीश्च पत्क्न्या" ( शु० य० प्रा० ३०।२२ ) इत्यादौ यमत्वद्योतनाय ककारं विलिखन्ति। न पुनः ककारमुच्चारयन्ति। किन्तु तकारमुच्चार्य द्वितीयतकारस्थानिकं तत्सजातीयम् नासामूलेनैवाधिकेन करणेन नासायाम् च यमम् उच्चारयितुं प्रवृत्ताः ककारादिसदृशीं स्पष्टां श्रुतिम् अनुत्पादयन्नपि मात्रां यावत् मुखे एवं धारयन्ति। ननु तकारस्य द्विर्भावे द्वितीयतकारस्यैव ( शु० य० प्रा० ४।१६१ ) यमत्वे ककारलेखनमसंगतम् तँकारयमस्यैव प्राप्तेरिति चेत्, न। नासामूलेन करणेन यमोच्चारणे प्रवृत्तो यत्नः जिह्वामूलीयसदृशीं श्रुतिमुत्पादयेदितितथैव संभवाभिप्रायेण लिखनात्।

ह—झषः स्मृताः । ईषन्नादा यण्जशः श्वासिनस्तु खफादयः । ईषच्छ्वासाँश्चरो विद्यादिति ( पा० शि० ३९-४० ) ॥ छ ॥

एवम् प्रयत्नान् उक्त्वा स्थानान्याह गद्येन—

**दशधा वर्णा भवन्ति-औरस-कण्ठ्य-मूर्धन्य-दन्त्योष्ठ्य-तालव्य-दन्तमूलीय-जिह्वामूलीय-यमानुस्वाराश्चेति ॥ ज ॥**

दशधेति—उरसि जाताः औरसाः १ । कण्ठे जाताः कण्ठ्याः २। मूर्धनि भवाः मूर्धन्याः ३। तालुनि भवा तालव्याः ४। दन्तेषु जाता दन्त्याः ५ । ओष्ठयोर्भवाः ओष्ठ्याः ६ । दन्तमूले भवो दन्तमूलीयः ७ । जिह्वामूले भवो जिह्वामूलीयः ८। यमाऽनुस्वारौ तु ९-१० व्याख्यास्येते इतीत्थं दशधा दशप्रकारैः वर्णाः भवन्ति उत्पद्यन्ते ॥ ज ॥

अथ केषां वर्णानां किं स्थानमित्याह—

**तत्र द्वावौरसौ ह्व इति ह्म इति ॥ झ ॥**

तत्र द्वाविति—वर्गपञ्चमैरन्तस्थाभिश्च युतो द्विविधो हकारो ह्वसदृशो ह्मसदृशश्च औरसो ज्ञेयः । तेन "सिꣳह्यसि" (शु० य० सं० ५।१०) "दुदुह्रेऽअह्वयः" ( शु० य० सं० ३।१६ ) इत्येवमादयो हकाराः औरसाः । व्याख्यातं चैतन्मूले ( या० शि० व० ५७-५८ ) एव । करणं चात्र कण्ठ्यवत् हनुमूलमेव विशेषाऽनुक्तेः ॥ झ ॥

**त्रयः कण्ठ्याः-अ आ आ ३ इत्यवर्ण-हकार-विसर्जनीया इति ॥ ञ ॥**

---

१ अष्टौ वर्णस्थानानि भवन्ति इत्यधिकः ख० । "दशधेत्यारभ्य-यमाऽनुस्वाराश्चेत्यन्तपाठस्थाने-"अष्टौ स्थानानि" इति पठित्वा "ओष्ठ्य-दन्तमूलीय" एतद्रहितः "औरस्यादिपाठोदर्शितः क० ॥ २ स्य क, ख, घ० ॥ ३ नासिक्या क, ख० ॥ ४ नास्ति घ० ५ स्यौ ङाति० ॥ ६ हहा क० । ह्व ह्य इति ख० ॥

७ जातिपक्षं स्वीकृत्येदमुक्तम् ॥

८ अ आ आ ३ त्रयः कण्व्याः क० । अ अ आ ३ अवर्णं हकार विसर्जनीया इति त्रयः कण्व्याः ख ॥ कण्व्या अवर्णं ह ग, घ, च० ॥

अथ इति—अत्र अथ इत्युक्तिर्जात्यऽभिप्रायेण। ह्रस्वदीर्घप्लुतेति त्रिविधः अवर्णः। हकारश्च औरसभिन्नो ग्राह्यः तस्य पृथगुक्तेः पृ० ५७। विसर्गश्च। एते कण्ठाधिकरणे हनुमूलकरणेन उत्पद्यन्तेऽइत्यर्थः ॥ ञ ॥

**षण्[1]मूर्धन्याः ट ठ ड ढ ण षा इति ॥ ट ॥**

षडिति—षकारो टवर्गश्च इत्येते षड्वर्णा मूर्धनि तालुत उपरिभागे जिह्वाग्रं प्रतिवेष्ट्य तेन करणेन उत्पद्यन्ते इत्यर्थः ॥ ट ॥

**नव[2] तालव्याः इ ई ई ३ इतीवर्ण च छ**
**ज झ ञ य शा एकारश्चेति ॥ ठ ॥**

नवेति—नवेति जात्याख्यानम्। एते तालुभागेजिह्वामध्यस्पर्शाद्‌उत्पद्यन्ते। एकारः ऐकारस्यापि उपलक्षणम्। तयोर्वैशेष्यं तु प्राक् (पृ० ९०) व्याख्यातम्। नवेति गणना प्रातिशाख्याऽनुसारिणी। व्याख्यानं तु भाष्याऽनुसारि ॥ ठ ॥

**अष्टौ[3] दन्त्याः ऌ ॡ ॡ ३ इति ऌवर्ण त थ द**
**ध न लकार सकारा इति ॥ ड ॥**

अष्टाविति—अष्टाविति जात्यभिप्रायेण ज्ञेयम्। शेषं स्पष्टम्। एते दन्तस्थाने जिह्वाग्रेण स्पर्शे कृते उत्पद्यन्ते ॥ ड ॥

**नव[4] ओष्ठ्याः-उ ऊ ऊ ३ इत्युवर्ण प फ ब भ म**
**वकारोपध्मानीया ओकारश्चेति ॥ ढ ॥**

---

१ अष्ट षट् मृ० क, ख० ॥ मूर्धन्याः षकारो टवर्गश्चेति घ० ॥

२ दशतालव्याः-च छ ज झ ञ य श इ ई ई ३ इति क, ख० व्या इवर्ण चवर्ग शकारैकारयकाराः ग, घ०। शकार एकार यकारा इति च० ॥ यद्यपि प्रातिशाख्ये एकारस्यैव तालुस्थानता उक्ता तथापि "ऐकारौकारे-( शु० य० प्रा० १।७३ ) ति सूत्रस्थभाष्याऽनुरोधादैकारास्यापि बोध्यम् ॥

३ अष्टदन्त्याः तथदधनऌलसाः क०। दन्त्याः तथदधनऌलसा ख०। दन्त्या ऌवर्णसकारतवर्गाश्च ग, घ, च० ॥

४ एकादश ओष्ठ्याः प फ ब भ मा उ ऊ ऊ ३ व उपध्माचेत्यादयः क, ख०। नवौष्ठ्याः उवर्णवकारोपध्मानीयपवर्गा ग, घ, च० ॥

**नव ओष्ठ्या इति**—नवेति संख्यानं पूर्ववत् । एते वर्णाः ओष्ठस्थाने ओष्ठकरणेन उत्पद्यन्ते । वकारस्य तु ओष्ठस्थाने दन्तैः करणैरुत्पत्तिर्बोध्या । अत एव "दन्त्योष्ठ्यो वः स्मृतो बुधैः" ( पा. शि० १८ ) इति पाणिनिशिक्षा दन्तानां करणरूपाणां लाघवात् स्थानत्वेन निर्दिशन्ती अविरुद्धैव । स्थानं त्वस्य ओष्ठमेवेति दिक् । ओकारेण औकारस्य अपि संग्रहः । अनयोर्वैशेष्यं प्राक् ( पृ० ६० ) व्याख्यातम् ॥ ठ ॥

## एको दन्तमूलीयो रेफः ॥ ढ ॥

**एको दन्तेति**—रेफो दन्तमूले जिह्वाग्रस्पर्शेन उत्पद्यते इत्यपि संभवाभिप्रायेण प्रातिशाख्यदिशा उक्तम् । वस्तुतो जिह्वामध्यकरणेन मूर्धस्थानोक्तिः पाणिन्यादिसंमता रेफस्य न विरुध्यते । यतो जिह्वाग्रेण दन्तमूले ईषत्स्पृष्टे अर्थादेव जिह्वामध्यस्य मूर्धनि स्थितिरिति करणभेदस्तु पाणिनेरपिग्राह्यः ॥ ढ ॥

## सप्त जिह्वामूलीयाः[1]— ऋ ॠ ऌ ३ इत्यृ— वर्ण ᳵ क क ख ग घ ङ इति ॥ त ॥

**सप्त जिह्वेति**—सप्तेति जात्याख्यानं पूर्ववत् । एते नव वर्णा जिह्वाया मूलभागे हनुमूलेन करणेन उत्पद्यन्ते । अत्र ऋवर्णस्य जिह्वामूलीयत्वमपि पाणिनीयस्य मूर्धन्योक्त्याऽविरुद्धमेव । मूर्धन्यषटवर्गाभ्यामस्य करणविशेषप्रदर्शनायात्रोक्तिः । न तु स्थानद्वयेन द्विविधऋवर्णोत्पत्तिः प्रतिपत्तव्या । पाणिनिना तु प्रक्रियालाघवायास्य मूर्धन्यता स्वीकृता रेफइवेति । त ॥

## चत्वारो[2] यमाः—कुँ खुँ गुँ घुँ इति ॥ घ ॥

**चत्वार इति**—उकारः सादृश्यार्थः । सादृश्यं च वर्गाद्यत्वादिना ग्राह्यम् । अर्धचन्द्रेण च आनुनासिक्यं द्योत्यते । तेन आनुनासिक्यगुणविशिष्टाः वर्गप्रथमाः वर्गद्वितीयाः वर्गतृतीयाः वर्गचतुर्थाः । इति इत्थम् । चत्वारः चतुर्विधाः । यमाः । भवन्ति इति

---

१ जिह्वा··याः पञ्च कुं खुं गुं घुं ङुं इति क, ख० । पञ्च जि··याः ऋ ᳵ कौ कवर्गं इति ग. घ० ॥

२ क्म-ख्म-ग्म-घ्म कुँ खुँ गुँ घुँ इति यमाश्चत्वारः क, ख० ॥

शेषः । तथा हि—नासिकामूलकरणेनाधिकेन संस्कृतो वायुः नासिकासहकृते स्वस्ववर्गीयस्थाने(१) यमाऽभिख्यां भजते । अत एव वर्गपञ्चमात् हुँ इति नासिक्यात् अनुनासिकाच्च यमानां पार्थक्यम् । ते हि समानस्थानकरणाः ( शु० य० प्रा० १।८० )। यमास्तु नासिकामूलमात्रकरणाः ( शु० य० प्रा० १।८२ )। अयमाशयः—"रुक्क्मः" इत्यादौ "रुक् इति ककारादिकमुच्चरितुं जायमानो यत्नः संयोगादिरुकारादिकमुच्चार्य नासिकामूले विच्छिन्नः पुनस्तत्र तत्सजातीयम् आनुनासिक्यम् अपरम् उच्चारयितुं प्रवृत्तः ककारादिसदृशीं स्पष्टां श्रुतिम् अनुत्पादयन् अपि नासिकायां तत्तत् स्थाने च विधृत एव मात्राविलम्बितः(२) सन् नासिक्यगुणविशिष्टः ककाराद्यनुप्रदानादिप्रयुक्तधर्मवैशिष्ट्येन कँ खँ गँ घँ (३) इत्यन्यतमसदृशः यमः ( मुखधारणया विच्छेदरूपः ) न तु तथैव उच्चारितः भवति । अत एव यमानाम् अशरीरित्वमुपपद्यते । वर्णस्वरूपाभावादेव अक्षरसमाम्नाये अयुक्ता इत्ययोगाः मुखस्थश्रुतिविशेषात्मलाभवाहनाच्च वाहाः । अयोगाश्च ते वाहाः अयोगवाहाः इत्यन्वर्थसंज्ञा यमानां पाणिन्यादिभिः प्रतिपादिता विसर्गादिवत् इति ॥ घ ॥

---

( १ ) तथाहि "नासिक्यास्तावत्तत्वें एव यमाः ऋ० प्रा० १।४८ उक्ताः । द्वितीय तु प्रकृत्याश्रयं यत्स्थानं तदर्थम् इदमुच्यते–ऋ० प्रा० १।३८ इत्यत आरभ्य यानि स्थानान्युक्तानि एषु स्थानेषु यमानां स्थानोपदेशः ऋ० प्रा० १।५० इति । तच्च भवत् यथान्तरं भवति । ककारादिसरूपो यम इति ॥ यमः प्रकृत्यैव सदृक्" ऋ० प्रा० ६।३२ इति सूत्रे वक्ष्यति । एवं विंशतिर्यमाः बह्वृचानां भवन्ति । स्वरूपैश्चत्वार एव इति ऋ० प्रा० सूत्रयोः ६।२६,३४, भाष्ये उव्वटाचार्याः । शु० य० प्रा० ८।१४ सूत्रभाष्ये च प्राहुः ।

( २ ) "श्रुतिर्वा यमेन मुख्यास्ति समकाला" ( ऋ०प्रा० ६।३३ ) इति । यद्यपि अर्धमात्रिकः कालः प्राप्नोति । तथापि अस्याः शाखायाः दीर्घपाठात् एकमात्रिकोविलम्बः सूक्तः ।

( ३ ) तथाहि वैदिकाः 'लक्ष्मीश्च पत्क्न्या" ( शु० य० प्रा० ३०।२२ ) इत्यादौ यमत्वद्योतनाय ककारं विलिखन्ति । न पुनः ककारमुच्चारयन्ति । किन्तु तकारमुच्चार्य द्वितीयतकारस्थानिकं तत्सजातीयम् नासामूलेनैवाधिकेन करणेन नासायाम् च यमम् उच्चारयितुं प्रवृत्ताः ककारादिसदृशीं स्पष्टां श्रुतिम् अनुत्पादयन्नपि मात्रां यावत् मुखे एवं धारयन्ति । ननु तकारस्य द्विभर्वे द्वितीयतकारस्यैव ( शु० य० प्रा० ४।१६१ ) यमत्वे ककारलेखनमसंगतम् तँकारयमस्यैव प्राप्तेरिति चेत्, न । नासामूलेन करणेन यमोच्चारणे प्रवृत्तो यत्नः जिह्वामूलीयसदृशीं श्रुतिमुत्पादयेदितितथैव संभवाभिप्रायेणलिखनात् ।

तथाहि–"स्पर्शा यमाननुनासिकाः स्वान् परेषु स्पर्शेष्वननुनासिकेषु" ऋ०प्रा० सूत्रे ६।२६ उव्वटाचार्याः स्वानिति किमर्थमुच्यते। संज्ञाप्रकरणे-"चतस्रोन्तस्थाः" ( १।६ अष्ट ऊष्माणः" १।१०) इति वर्णाः कृतसंख्या निर्दिश्यन्ते । न तथा यमाः तस्मादिह "स्पर्शा य० काः स्वान् परेषु० इत्युच्यमाने विंशतित्वात् स्थानिनाम् आदेशानामपि यमानां विंशतित्वप्रसङ्गः । स माभूत् । चतुर्णामेव यमानां प्रथमाः (कचटतपाः) प्रथमं (ककारादिरूपं ) द्वितीयाः ( खछठथफाः ) द्वितीयम् [ खकारादिरूपम् ] एवमापञ्चमादापद्येरन्नित्युच्यते इति ॥

एतेन शु. य. प्रातिशाख्य–( पृ०३०३ ) स्था कीर्तिप्रकाशाख्यटीप्पणीकारस्य "यज्ञइत्यत्र जगञाः । अत्र चवर्गतृतीयो जकारस्तस्य संख्यासवर्णो गकारसमावेशः । वर्णक्रमे यकारः जकार-पूर्ववर्गसमसंख्यसवर्ण यमगकारञकाराः । अत्र जकार-यमगकार—ञकारसंयोगे स्थानकरणपरित्यागेन—वर्णान्तरोत्पत्तिः । यथा ताम्रत्रपुसंयोगे कांस्यस्योत्पत्तिः । एवम्" इत्युक्तिर्निरस्ता । सानुनासिकजिह्वामूलीयगूँइतिसदृश्याः अपि श्रुतेरस्पष्टत्वात् 'यज्ञ' इत्यत्र 'यग्य' इति यग्ञ' इति वावदन्तः परास्ताः । स्पष्टं चैतत् प्राक् ( पृ० १२४ ) । नच "जञोर्ज्ञः" इत्यनुशासनेन वर्णान्तरापत्तिः शङ्क्या । अस्य लिप्यनुशासनात् । अन्यथा 'जञोर्ग्यं इति । जञोर्ग्ञं इति वाऽनु शासितं स्यात् । संप्रदायस्य प्रामाण्यं "द्वैधीभावे समुत्पन्ने लक्षणान् निर्णयो भवेत् । लक्षणं व्याऽविनाशि स्यात् सम्प्रदायोऽविनाशवान् (व० र०प्र० शि०२१३) इति । तु "लक्षणं न त्यजेद्धीमान् सम्प्रदायोऽन्यथा भवेत् । लक्षणेन विना शिष्यसम्प्रदायो विनाशवान्॥" ( अ० शि० १२३ ) इति च वचनात् लक्षणनाशे सति ज्ञातव्यम् ।

तथा च गुरुवर्या श्रीरामभवनशर्माणः–तत्र तावद्यमविषयेवर्ततेवैमत्यं बहूनामप्यध्यापकानाम् परन्तु प्रातःस्मरणीयस्वर्गीयम० म० गुरुवरदामोदरशास्त्रिणां सिद्धान्तस्त्वेवंविध आसीद्यमाश्चत्वारएवेति नपुनर्विंशतिरिति विंशतिसंख्यासन्निवेशश्च प्रकृतिगतसंख्यानुसारेण यथाकथञ्चिदुपपादनीयः ।

अत एव शिक्षासङ्ग्रहे नारदीयशिक्षायां चौखम्बामुद्रितपुस्तके पृ० ४२८ तल्लक्षणे "अनन्त्यश्च भवेत्पूर्वोऽन्त्यश्च परतो यदि । तत्र मध्ये यमस्तिष्ठेत् सवर्णः पूर्व्ववर्णयोः इत्यत्र संख्याया अनुल्लेखः, सामवेदीयगौतमशिक्षायाञ्च पृ० ४५० "अथानन्त्या विंशतिर्भवन्ति ते कचटतपाः, खछठथफाः, गजडदबाः घझढधभाश्चेत्यथान्त्याः पञ्च ते ङञणनमाश्चेत्यथानन्त्याश्चत्वारस्ते सयमास्ते कुं खुं गुं घुं इति । अत्र प्रकृतिविशेषणतया विंशतिसंख्यानिर्देशः कृतो न विधेयविशेषणतया, एवमेवाथर्ववेदीयमाण्डूकशिक्षायाम् । स्पर्शानामुत्तमैः स्पर्शैः संयोगाच्चेदनुक्रमात्, आनुपूर्व्यायमाँस्तत्र जानीयाच्चतुरस्तथा। ११६ । अत्रापि स्पष्टमेव चतुष्ट्वाभिधानं कृतम् । इति ॥

एवम् उत्पत्तिकाले प्रकृतिगतस्थानेषु नासामूलकरणेन नासायां च वर्गप्रथमद्वितीयतृतीयचतुर्थंत्वेति चतुर्भिरनुप्रदानैः चतस्रः एव यमश्रुतयो मुखस्थाः श्रूयन्ते इति सर्वशाखिसिद्धान्तः ॥

अथ यमानामुदाहरणानि प्राह—

रुक्क्मेति प्रथमो ज्ञेयः 'सक्थ्ना इत्यपरो भवेत् ।
विद्ग्ध्नाते तु तृतीयश्च जम्भे दद्घ्मश्चतुर्थकः ॥९३॥

रुक्क्मेतीति—प्रथमो यमो वर्गाद्यरूपः रुक्क्मः (शु०य०सं० १२।१) इत्यत्र ज्ञेयः । अपरो यमः वर्गद्वितीयरूपः सक्थ्ने-(शु०य०सं० २३।२६) त्यत्र । भवेत् अस्ति । तृतीयो वर्गतृतीयरूपश्च यमः विद्ग्ध्नाते (शु० य० सं० १२।२९) इत्यत्र ज्ञेयः । चतुर्थो वर्गचतुर्थरूपो यमः 'जम्भेदद्घ्मः (शु० य० सं० १६।६४) इत्यत्र ज्ञेयः । इत्थं यदि कवर्गा एव चत्वारो यमाः संमता अभविष्यन् तर्हि सक्थ्नादिषु थद्धानां यमत्वं कथं निरदेक्ष्यत् आचार्यः । अतो विंशतिस्थानिनां सरूपाः वर्गप्रथमत्वादिचतुर्धर्मविशिष्टा नासिक्यगुणाः चतुर्विधाः अप्रत्यक्षवर्णशरीरा श्रुतिविशेषा एव यमाः विसर्गाऽनुस्वारादिवत् इति सिद्धम् ।

अथ यमस्थलमाह—

अपञ्चमैश्चैकपदे संयुक्तं पञ्चमाक्षरम् ।
उत्पद्यते यमस्तत्र सोऽङ्गं पूर्वाक्षरस्य हि ॥ ९४ ॥

अपञ्चमैश्चेति । एकपदे पदमध्ये । पञ्चमाक्षरं वर्गान्त्यम् । अपञ्चमैः वर्गप्रथमद्वितीयतृतीयचतुर्थैः । संयुक्तं यत्र स्यात् तत्र । यमो विच्छेदः । उत्पद्यते । अर्थात् कादिवर्गचतुष्टयेषु आद्यानां चतुर्णां पञ्चमे परे पूर्वसदृशः यमः मध्ये यो वर्णः स भवति । एवं

---

१ तृतीयः सद्भ्र इत्याहुः उपध्मेति चतुर्थकः क ख० ॥ प्रथमश्चोष्ठनासिक्यो ज्ञेयो वै यमसंज्ञकः । द्वितीयः कण्ठयदन्त्यश्च नासामूलमुपाश्रितः ॥ तृतीयः दन्त्य-श्रोष्ठयश्च नासायामेव निर्दिशेत् । चतुर्थो दन्तनासिक्यः कण्ठे चाभिहिता यमाः ॥" इति पद्यद्वयम् अधिकं दृश्यते घ० । प्रथमौ चौष्ठनासिक्यौ...द्वितीयः... तः ॥ तृतीयकण्ठयजिह्वाग्रे नासाया...व । चतुर्थो हृदि नासिक्यः कण्ठे चाभिहिता यमाः क, ख, ॥

२ आपञ्चमैश्चैकपादः सं क, ख० ॥

३ त्पर ग० ॥ ४ न्ते यमास्तस्याऽङ्गं पूर्वाक्षरकस्य हि घ० ॥

विंशतिस्थानिन स्वरूपाः चत्वारश्च सन्तो यमा भवन्ति । तथा हि (शु० य० प्रा० ४ १६१ ) भाष्ये उव्वटाचार्या व्याख्यातवन्तः । स यमः । पूर्वस्वरस्य । हि एव । अङ्गम् अवयवः । क्लीवत्वं विधेयापेक्षया ज्ञेयम् ।

अथ यानि अपञ्चमैरिति यमस्य प्रतिप्रसवस्थलानि तान्याह—

पञ्चमाः शषसैर्युक्ता अन्तस्थैर्वापि संयुताः ।
यमास्तत्र निवर्त्तन्ते श्मशानादिव बान्धवाः ॥९५॥

पञ्चमा इति—"ऊष्मान्तस्थाभ्यश्च स्पर्शः" ( शु० य० प्रा० ४।१०२) इति यत्र पञ्चमाः स्पर्शाः द्विर्भवन्ति । यथा—"आस्मिन्" (शु० य० सं० ३।१) "विल्मिने" (शु० य० सं० १६।३५) इत्यादौ । तत्र ऊष्मान्तस्थान्यतरसंयुक्तपञ्चमस्पर्शपिण्डे यमाः निवर्त्तन्ते । अर्थात् तत्र ते मध्ये द्वित्वाज्जाताः पञ्चमस्पर्शवर्णाः यमगुणत्वं न प्राप्नुवन्ति तेन अत्र विच्छेदाभावात् ऊर्णापिण्डता दारुपिण्डता च क्रमेण विज्ञेया । तत्र दृष्टान्तमाह । शवनेतारो बान्धवाः । श्मशानाद् इव यथा निवर्त्तन्ते ॥ तथा हि प्रातिशाख्यम् "ऊष्मभ्यः पञ्चमेषु यमापत्तिर्दोषः" ( शु० य० प्रा० ४।१६२ ) इति । प्रातिशाख्ये ऊष्मग्रहणेन अन्तस्थानामपि ग्रहणम् । द्विर्विधायक ( ४।१०२ ) सूत्रे उभयदर्शनेन अवयवद्वारा समुदायग्रहणात् । एतत् पूर्वपद्यस्थस्य "अपञ्चमैरित्यस्य एव व्याख्यानं द्रष्टव्यम् ।

( क ) आद्या मात्रा तु कण्ठयस्य एकारौकारयोर्भवेत् ।
तालव्यस्य तथौष्ठ्यस्य द्वितीया च यथा क्रमम् ॥

( ख ) यादृशी रत्नवर्णाभा जपायाः कुसुमेऽथवा ।
तादृशं रञ्जयेद्वर्णं प्रान्ते नासिक्यमाचरेत् ॥

---

१ अस्याग्रे—"ऋवर्णेति परे सादावनुस्वारो द्विमात्रिकः । संयोगे परभूतेषु ह्रस्व एवोच्यते बुधैः" । इति अधिकं प्रपठ्य "आद्या मात्रा त्विति (या० शि० व० २०) पठितम् ख, घ, ज० ।

(ग) लाक्षारक्तं यथा तोयं नकारान्तं पदं तथा ।
सर्वं रङ्गं विजानीयाच्छत्रूनिति निदर्शनम् ॥
(घ) लुप्ते नकारे यत्स्वारं रञ्जन्ति शौनकादयः ।
एवं रङ्गं विजानीयान्न चांसीदिव विन्दति ॥
(ङ) प्रथमस्थषकारेण तकारेण च संयुतम् ।
एतदक्षरमासाद्य त्रैष्टुभेति निदर्शनम् ॥
(च) प्रथमस्थषकारेण थकारेण च संयुतम् ।
एतदक्षरमासाद्याऽधिष्ठानमिति दर्शनम् ॥

एते कादिचान्ताः श्लोकाः सर्वपुस्तकेषु न दृश्यन्ते क्वचिच्चोपलभ्यन्तेतोऽत्र योजिताः । (क) पद्यं व्याख्यातं प्राक् (६० पृष्ठे) ॥ खादिघान्तानि रङ्गाधिकारे (पृ० १३३-१३४) व्याख्यातानि ॥ ङ-च पद्ये तु पदाधिकारोक्ते "प्रथमे न ठकारेणे (१४१ पृष्ठे) ति पद्ये गतार्थत्वादुपेक्षिते ।

ननु जम्भे दद्ध्मश्चतुर्थक इति यम उदाहृतस्तत्र चतुर्थात्परे द्विर्भूते यमापत्तिः संभवति इति वर्गतृतीयस्य दकारस्य प्रदर्शनं कथमित्याकाङ्क्षायामाह—

**चतुर्थश्च तृतीयेन द्वितीयं प्रथमेन च ।**
**आद्यं मध्यं तथान्त्यञ्च स्वरूपेणाभिपीडयेत् ॥ ९६ ॥**

चतुर्थश्चेति—वर्गचतुर्थं वर्णं तृतीयेन । वर्गद्वितीयं वर्णं प्रथमेन च । अभिपीडयेत् द्विः कुर्यात् । तथा हि "प्रथमैर्द्वितीयास्तृतीयैश्चतुर्थाः" शु. य. प्रा० ४।१०८ इति । वर्गाणामाद्यतृतीयपञ्चमास्तु स्वरूपेणैव प्रथमाक्षरं प्रथमेनैव, तृतीयं तृतीयेनैव, पञ्चमं पञ्चमेनैव । अभिपीडयेत् द्विरुच्चरेत् । यथा-वर्गाद्योदाहरणम् सम्यक्क्स्रवन्ति (शु० य० सं० १३।३८) अत्र द्वौ ककारौ सकारो रेफश्च संयोगः ।

---

१ आदि ग, घ० ॥

२ "नत्वाभीरिव विन्दति ३" ॥ (ऋ० सं० १०।१४६।१) इति पाठश्चेत्साधुः स्यात् । यद्वा "नाभ्याऽआसीन्निदर्शनम्" (शु० य० सं० ३१।१३) इति पाठः स्यात् । तत्र "लोकाँ॥ अकल्पयन्" इति रङ्गस्य विद्यमानत्वात् ॥

तत्र पूर्वः ककारो द्विरुक्तिजः । वर्गद्वितीयोदाहरणम् यथा-"वि-क्ख्याय" ( शु० य० सं० ११।२० ) इत्यत्र ककारखकारौ यकारश्च संयोगः । तत्र खकारः ककाररूपेण द्विरुक्तः । वर्गतृतीयोदाहरणम् यथा-"अग्ग्निः" ( शु० य०सं० ३।६ ) इत्यत्र द्वौ गकारौ नकारश्च संयोगः । तत्र पूर्वो गकारो द्विरुक्तिजः । वर्गचतुर्थोदाहरणम् यथा-"आजिग्घ्र" ( शु० य० सं० ८।४२ ) इत्यत्र गकारघकारौ रेफश्च संयोगः । तत्र घकारो गकाररूपेण द्विरुक्तः । वर्गपञ्चमोदाहरणम् यथा —शुङ्ङसि (शु० य० सं० १०।२४) इत्यत्र द्वौ ङकारौ संयोगः । तत्र पूर्वो ङकारो द्विरुक्तिजः । एवमन्यत्राप्यूह्यम् ॥ ९६ ॥

( क ) अवग्रहपदच्छेद उदात्तं दृश्यते यदि ।
स्वरं तं स्वरितं प्राहुः संधौ तु स्वार्यते परम् ॥

अवग्रहपदच्छेद इति । अवग्रहार्थं पदे विच्छिन्ने यदि तत्र उदात्तं दृश्यते, तं स्वरं स्वरितं प्राहुः । संहितायां बुधाः इति शेषः । यतः । सन्धौ संहितायाम् । तु । परं स्वार्यते । अर्थात् "समिद्धोऽअञ्जन्" ( शु० य० सं० २९।१ ) इत्यादौ "समिद्धऽइति सम् । इद्धः" (शु० य० प० २९।१ इति अवग्रहपदस्य सम् इत्यस्य विच्छेदकाले पूर्वस्वरस्य उदात्तत्वात् व्यञ्जनस्य मकारस्याऽपि पूर्वाङ्गत्वात् उदात्तत्वं दृश्यते । तम् स्वरम् उदात्तस्वराङ्गं मकारम् । संहितायाम् इद्ध इति स्वरिते-कारेण योगात् पूर्वाङ्गताऽभावेन परस्याङ्गतायाम् । स्वरितं ज्ञेयम् । तथा हि "व्यञ्जनꣳस्वरेण सस्वरम्" (शु० य० प्रा० १।१०७) इति ॥

( ख ) स्वरसन्धिविधानेन नीचोच्चत्वं विधीयते ।
व्यञ्जनाद्वा स्वराद्वापि तत्सन्धौ स्वार उच्यते ॥

( ग ) उदात्तान्निहतः स्वारः स्वरितात्प्रचयो भवेत् ।
उदात्तात्स्वरितात्पूर्वं नान्य आपद्यते स्वरः ॥

( घ ) पदकाले यः स्वरितः संहितायां तथैव च ।
स्वरिताच्चेद्भवेत्पश्चात् स एव निचितः स्वरः ॥

एते कादिघान्ताः श्लोकाः सर्वपुस्तकेषु अत्र स्थले दृश्यन्ते अतः अप्राकरणिकाः अपि योजिताः । तत्र ( क-ख ) व्याख्याते ( ९४ पृ० ) । ( ग-घ ) च ( ७०-७१ पृ० ) ॥

अधुना द्विर्वचनोत्पन्नस्याऽन्यस्य वा वर्गाद्यस्य वर्णविशेषे परे विशेषतां दर्शयति-

**प्रथमाश्च तृतीयाः स्युः परे घोषवति स्थिते ।**
**पञ्चमाः पञ्चमे पाठे द्वितीयाः शषसेषु च ॥ ६७ ॥**

प्रथमाश्चेति—"स्पर्शोऽपञ्चमः स्वरधौ तृतीय-( शु० य० प्रा० ४।११८ ) मिति वर्गप्रथमाः । पाठे संहितायाम् । घोषवति वर्णे परे स्थिते सति न स्वरूपेणोच्चारणीयाः । किन्तु । ते तृतीयाः स्युः । यथा—"यत् + ग्रामे" । इत्यत्र वर्गाद्यस्य तकारस्य द्विर्वचनं भवति तस्य घोषवति गकाराक्षरे परे स्थिते सति न स्वरूपेणोच्चारणम् । किन्तु स्ववर्गतृतीयेन दकाररूपेणोच्चारणमिति । यश्चात्र द्विरुक्तया जातः प्रथमस्तकारस्तस्यापि पुनर्द्वित्वे "स्ववर्गीये चानुत्तमे" ( शु०य०प्रा०४।११५ ) इति निषिद्धे। पूर्ववत् तृतीयत्वे च सति दकाररूपेणैवोच्चारणम् । उत्तरस्य तृतीयस्य घोषवत्त्वात् । तेन—"यद्द्ग्रामे" ( शु० य० सं० ३।४५ ) इत्यत्र द्वौ दकारौ गकारौ रेफश्च संयोगः ॥ घोषवदिति स्वरस्याप्युपलक्षणम् । यथा—उत् + एनम् = उदेनम् (शु०य०सं० १७।४६) इति ॥ किञ्च "पञ्चमे पञ्चमम्" ( शु०य० प्रा० ४।१२१ ) इति वर्गप्रथमाः पञ्चमेऽक्षरे परे पञ्चमाः स्युः स्ववर्गपञ्चमाक्षरेणोच्चारणीयाः । यथा-ग्राक् + मात्या=ग्राङ्ङ्मात्या ( शु० य० सं० १३।५८ ) इत्यत्र द्वौ ङकारौ मकारश्च संयोगः ॥ शषसेषु च वर्णेषु परभूतेषु वर्गाद्याः । द्वितीयाः स्युः वर्गद्वितीयत्वेनोच्चारणीयाः । यथा-अनुष्टुप्फ्शारदीत्यत्र पकारफकारौ शकारश्च संयोगः । शौनकमतमेतत् । तथाहि—"असस्थाने मुदि द्वितीयः शौनकस्य" ( शु० य० प्रा० ४।१२० ) इति । माध्यन्दिनानान्तु 'जिति प्रथम-शु० य० प्रा० ४।११६ ) मिति प्रातिशाख्यानुसारि 'पकारान्ते पदे पूर्वे इति ( पृ० १०३ ) कारिकायां फसवर्णमिति शौनकमतं प्रदर्श्य निदर्शने प्रथमस्यैव दर्शनात् "अनुष्टुप्प्शारदी" ( शु० य० सं० १३।५७ ) इत्यत्र द्वौ पकारौ शकारश्च संयोगः ॥६७॥

## अथाऽध्येतृधर्माः।

अथाऽध्येतृधर्मान् वक्ष्यमाण आचार्यः तावत् दुष्टोच्चारणं त्याज्यमित्युपदिशति–

**उपांशु त्वरितं[1] चैव योऽधीते वित्रसन्नपि[2]।**
**अपरूपसहस्राणां सन्देहे स[3] प्रवर्त्तते ॥ ९८ ॥**

उपांशु त्वरितमिति। उपांशु अप्रकाशोच्चारणम्। त्वरितम् शीघ्रतयोच्चारितम्। येन वर्णस्फोटो न भवेत् तच्छैघ्र्यमत्र विवक्षितम्। स्वरितमितिपाठे एकश्रुत्योच्चारणमित्यर्थः। अपि च। वित्रसन् अतिबिभ्यन् सन् यः अधीते पठति सः। अध्येता अपरूपसहस्राणाम् अनेकापशब्दप्रयोगाणाम्। सन्देहे एवमस्ति एवं वेति विकल्पे। प्रवर्त्तते पतितो भवति। विकल्पं प्राप्य निश्चेतुं न शक्नुयादिति यावत्। अतः एतत् त्रिविधमुच्चारणं दुष्टत्वेन हेयमित्युपदेशः ॥ ९८ ॥

अथ विद्याग्रहणाऽसमर्थान्परिगणयति—

**पञ्च विद्यां न गृह्णन्ति चण्डास्तब्धाश्च ये नराः।**
**अलसा[4] रोगिणश्चैव येषां च विस्मृतं[5] मनः ॥९९॥**

पञ्च विद्यामिति—ये नराः। चण्डाः सकोपाः। अध्यापकाय द्रुह्यन्त इति यावत्। च पुनः। स्तब्धाः उपदिष्टपदार्थग्रहणे पाटवरहिताः। तथा। अलसाः मानसादिकरणानामवधारणे ये तत्परा न भवन्ति ते। तथा रोगिणः दीर्घरोगाः। तथा येषाम् मनः। विस्मृतम् गृहीतपदार्थधारणेऽक्षमम्। ते च एते। पञ्च पञ्चविधाः नराः। विद्याम् अधीतम्। न नहि। गृह्णन्ति। धारयितुं न शक्नुवन्ति इत्यर्थः। एतेन विद्यार्थिभिरेते दोषास्त्याज्या इत्युपदिष्टम् ॥९९॥

अथ के पुनरधिकारिणः इत्याह—

**अहेरिव गणाद्भीतः सम्मानान् नरकादिव।**
**राक्षसीभ्य इव स्त्रीभ्यः स विद्यामधिगच्छति ॥१००॥**

---

१ स्व च० ॥ २ हृदि संज्ञकः अपि रूपसहस्रेपु संदेहेपु क० । ३ पु च्चातिरि० ॥ ४ श्चातिरोगाश्च ख, ग, च०॥ ५ स्तृ च० ॥

अहे रिवेति—यः पुरुषः । गणात् जनसमूहात् । अहेः सर्पात् । इव यथा । भीतः भययुतः भवेत् इति शेषः । तथा । सम्मानात् स्वकीयादरस्थानात् । नरकात् । इव । विभीयात् । किंच । स्त्रीभ्यः सकाशात् । राक्षसीभ्यः । इव । विभीयात् । सः पुरुषः । विद्याम् अधीतम् । अधिगच्छति प्राप्नोति । एतेन विद्येप्सुना जनसमूहादिषु न स्थातव्यम् । यतो जनसमूहस्थित्या वार्त्तालापादिना समयहानिः स्यात् । यत्र सम्मानं भवति तत्रैव स्थातुमिच्छति—तत्र स्थित्या च अध्ययनाय गुरुं प्रति गन्तुमिच्छा नश्येत् । स्त्रीषु च आसक्तिवशेन विद्यातः उपरामः स्यात् । इति भावः ॥ १०० ॥

किञ्च—

**न भोजनविलम्बी स्यात् न च नारीनिबन्धनः ।**
**सुदूरमपि विद्यार्थं व्रजेद् गरुडहंसवत् ॥ १०१ ॥**

न भोजनेति—भोजने विलम्बवान् न भवेत् । नारीपरतन्त्रश्च न स्यात् । यथा गरुडहंसौ सुदूरमपि मानसरोवरादिस्वेष्टस्थानं गच्छतः । तथैव । विद्यां ग्रहीतुं सुदूरं च गन्तुमुत्सहेत ॥ एतेन प्रतिबन्धकान् अविगणय्य यः विद्योत्साही स अधिकारीति द्योत्यते ॥ १०१ ॥

ननु विद्याग्रहणे महत्कष्टमित्यत आह—

**सुखार्थी चेत्[१] त्यजेद्विद्यां विद्यार्थी चेत्[२] त्यजेत्सुखम् ।**
**सुखिनस्तु[३] कुतो विद्या विद्यार्थिनि[४] कुतः सुखम् ॥ १०२ ॥**

सुखार्थी चेदिति—सुखस्य अर्थी चेत् । विद्यां त्यजेत् । विद्याया अर्थी चेत् सुखं त्यजेत् । तु यतः । सुखिनो नरस्य विद्या कुतः लभ्येत । विद्यार्थिनि । सुखं कुतो लभ्येत । इति मत्वा यो विद्यार्थी सुखाभिलाषं त्यक्त्वा विद्याग्रहणपरः सन् कष्टं सहेत स एव अधिकारी इति सूचितम् ॥ १०२ ॥

---

१ च त्य च० ॥ २ सन्त्य ग० । च त्य च० ॥ ३ श्व ग, च० ॥ ४ सुखं विद्यार्थिनः कुतः क, ख, घ० । घ० तु "यथा खनन्निति ( या० शि० ११० ) पठित्वा एतत् पठितम् ।

अथ विद्याधारणोपायमाह—

**गुणिता शतशो विद्या सहस्रावर्त्तिता पुनः ।**
**आगमिष्यति जिह्वाग्रे स्थलान् निम्नमिवोदकम् ॥१०३॥**

गुणिता शतश इति—यथा । उदकम् जलम् । समभूप्रदेशात् । स्थलात् नीचप्रदेशं प्रति । शीघ्रम् आगच्छति । तथा । विद्या । पूर्वं शतशः शतवारम् यथा स्यात् तथा गुणिता घुष्टा । पुनः पश्चात् सहस्राऽऽवर्त्तिता सती । जिह्वाग्रे आगमिष्यति ॥ १०३ ॥

अथ धारणोपायमनूद्य धारणदार्ढ्यमाह—

**शतेन गुणिताऽऽयाति सहस्रेण च तिष्ठति ।**
**शतानां च सहस्रेण प्रेत्य चेह च तिष्ठति ॥ १०४ ॥**

शतेनेति—शतेन शतवारम् । गुणिता घुष्टा । विद्या । आयाति साधकसाहाय्येन स्वीक्रियते । ततः । सहस्रवारमावर्त्तिता सती च । तिष्ठति बहुकालं यावत् धृता भवति । परं च । शतानाम् । सहस्रेण लक्षाऽऽवर्तनेनइत्यर्थः । प्रेत्य अन्यस्मिन् जन्मनि । च अपि । इह च अस्मिन्नपि जन्मनि । तिष्ठति धृता भवति ॥ १०६ ॥

विद्याधारणे अभ्यासस्यैव प्राधान्यमिति दृष्टान्तमुखेन पुष्णाति—

**जलमभ्यासयोगेन शैलानां कुरुते क्षयम् ।**
**कर्कशानां मृदुस्पर्शी किमभ्यासान्नसाध्यते ॥१०५॥**

जलमभ्यासेति—मृदुस्पर्शम् कोमलम् अपि । जलम् । कर्कशानाम् कठोरस्पर्शानाम् । शैलानाम् पर्वतानाम् । क्षयम् नाशम् । कुरुते विदधाति । इति दृष्ट्वा । अभ्यासात् किम् । न साध्यते । अपि तु सर्वमेव अभ्यासेन साध्यं जानीयात् । एतेन यावन्न विद्याधिगमस्तावत् अभ्यसन्नेव तिष्ठेत् न उपरमेत् इत्युपदेशः ॥ १०५ ॥

---

१ "यथा खनन्निति (पा०शि०व०११०) पठित्वा पठितम् ग० ॥ २ च्छत्येव च० ॥ ३ जप्त्वा शत ग० । जप्ता शत च० ॥ ४ प्रत्यंचदवति क० । प्रत्यंच मवति ख० ॥ ५ शिलायाः क० । शिलायां ख० शिलानां छ० ॥ ६ तेऽल्पमम् छ० ॥

एवम् अभ्यासे बलवत्ता अपेक्षिता तर्हि दुर्बलानां विद्या न सेत्स्यतीत्याह—

**यथा[1] पिपीलिकाभिश्च क्रियते पांसुसंचयम् ।**
**न[2] चात्र बलसामर्थ्य-मुद्यमस्तत्र कारणम् ॥ १०६ ॥**

यथेति—पिपीलिकाभिः । कर्तृभिः । पांसूनाम् धूलीनाम् । संचयम् उच्छ्रायम् । वल्मीकमित्यर्थः । क्रियते । अत्र पांसुसंचयने । बलस्य सामर्थ्यम् । न च न तु अस्ति । किंतु । तत्र । उद्यमः । एव कारणम् । अस्ति । एतेन शनैः २ किञ्चित् २ अपि अधीता विद्या कालेन महती संचिता भवतीत्युपदेशात् अभ्यासे उद्योग एव विधेयः न तु तत्र बलवत्ता अपेक्षिता इति सूचितम् ॥ १०६ ॥

उद्योग प्रकारम् अन्वयव्यतिरेक दृष्टान्तपुरस्सरमाह—

**अञ्जनस्य क्षयं दृष्ट्वा वल्मीकस्य तु[3] संचयम् ।**
**अवन्ध्यं[4] दिवसं कुर्याद् दानाध्ययनकर्मसु[5] ॥१०७॥**

अञ्जनस्येति—नेत्राभ्यां किञ्चित् २ ह्रासेन यथासर्वस्याञ्जनस्य क्षयः तथा विद्याया अपि क्षणं स्वाध्यायराहित्येन ह्रासः स्यात् । तु पुनः । कणशः पांसु-संचयेन यथा वल्मीकस्य संचयः भवति एवं विद्याया अपि प्रतिदिनं स्वाध्यायेन वृद्धिः स्यात् एतौ व्यतिरेकेन अन्वयेन च दर्शितौ दृष्टान्तौ । दृष्ट्वा अवलोक्य । शनैः २ सर्वं भवितुमर्हतीति विज्ञायेत्यर्थः । दानाऽध्ययन-कर्मसु दानाऽध्ययनसंध्योपासनाद्युपलक्षितनित्यक्रियासु । दिवसम् एकमपि दिनम् । अवन्ध्यम् । सफलम् । कुर्यात् । दानादिनित्यक्रियां विना सकृदपि दिनं व्यर्थं न गमयेदिति भावः । तेन "अहरहः स्वाध्यायोऽध्येतव्यः" (श० ब्रा०) इति श्रुतिरपि अनुग्राहिका स्यात् ॥ १०७ ॥

---

१ अत्र "शुश्रूषेति ( या० शि०व० १११ ) "गुरुशुश्रूषेति" ( या०शि० व० ११२ ) "ह्यानामिवेति" ( या० शि० व० १०८ ) च पठित्वा पठितमेतत् ग० । "यथा" खनन्निति ( या० शि० व० ११० ) च पूर्वं प्रपठ्य "शुश्रूषेति त्रयं पठित्वा एतत् पठितम् च० । पिपीलिकाभिः पांसुभिर्वल्मीकं क्रियते महत् क, ख, घ० । २ न तत्र क, ख, घ० । न बलं नात्र सा ग, च० ॥ ३. च ग० ॥ ४. वध्यं छ० ॥ ५. भिः च० ॥

अथ विद्यार्थिभिः उद्योगप्रतिबन्धिका निद्रा अल्पीयसी विधेया इत्याह—

ह्[1]यानामिव जात्यानामर्धरा[2]त्रार्धशायिनाम् ।
नहि विद्यार्थिनां निद्रा चिरं नेत्रेषु तिष्ठति ॥१०८॥

हयानामिति—यथा । अर्धरात्रस्य अपि अर्धं शेरते तच्छीलास्तेषामुत्तमजातीयानाम् । हयानाम् अश्वानाम् । नेत्रेषु । चिरम् बहुकालम् । न । तिष्ठति । तथा । विद्याभिलाषिणां नेत्रेषु निद्रा चिरं न तिष्ठति । इति सिद्धवदुपदेशः । अर्थात् विद्याभिलाषिभिरधिकं न शयनीयं येन अभ्यासहानिः स्यादिति ॥ १०८ ॥

किञ्च—

अन्नव्यञ्जनयोर्भा[3]गौ तृतीयमुदकस्य च ।
वा[4]योः संचरणार्थाय चतुर्थमुपकल्पयेत ॥ १०९ ॥

अन्नेति—क्षुधः । द्वौ भागौ । अन्नस्य व्यञ्जनस्य च । उपकल्पयेत् । तृतीयं भागमेकम् । उदकस्य जलस्य च । उपकल्पयेत् चतुर्थं भागं वायोः संचरणार्थमुपकल्पयेत् । अर्थात् यावता अन्नेन स्वस्य तृप्तिर्यदासंभाव्येत तदा तदर्धं भोक्तव्यं तत्रापि अर्धं व्यञ्जनस्य कर्त्तव्यम् येन आहारबाहुल्यात् अभ्यासो न नश्येत् ॥ १०९ ॥

किञ्च—

यथा खनन्खनित्रेण नरो वार्यधिगच्छति ।
तथा गुरुगतां विद्यां शुश्रूषुरधिगच्छति ॥ ११० ॥

नरः । यथा । खनित्रेण कुद्दालेन । खनन् सन् । भुवमिति शेषः । वारि जलम् । अधिगच्छति प्राप्नोति । तथा । शुश्रूषुः शिष्यः । गुरुगतां गुरौ वर्त्तमानाम् । विद्याम् । अधिगच्छति । आ जलोपलब्धेः यथा नरः भूमिं खनन्नेव आस्ते तथैव आ विद्याधिगमात् गुरोः शुश्रूषापरेण विद्यार्थिना भाव्यम् । इत्युपदेशः ॥ ११० ॥

---

१. अत्र "अन्नव्यञ्जनयोरिति ( या० शि० व० १०६ ) पद्यं दृश्यते च० ॥ २ मा० क० ॥ ३ गस् क० ॥ ४ वायुसंचरणा च० ॥ वायोः संचा छ० ॥

सेवयैव लब्धा विद्या फलवती भवतीत्याह—

**शुश्रूषा रहिता विद्या अपि मेधागुणैर्युता ।**
**वन्ध्येव युवती तस्य न विद्या फलिनी भवेत् ॥१११॥**

शुश्रूषया सेवया रहिता । धनदानाद्यन्यतरोपायेन गृहीता इत्यर्थः मेधागुणैः अशुश्रूषोः व्याख्यानचातुर्यादिधीगुणैः । युता । अपि । विद्या । तस्य नरस्य । यथा वन्ध्या अपुत्रदा । युवती स्त्री । भवेत् । एवं विद्या फलिनी दृष्टाऽदृष्टफलवती न भवेत् । एतेन गुरुशुश्रूषा अवश्यं विधेयेत्युपदेशः ॥ १११ ॥

किञ्च—

**गुरुशुश्रूषया विद्या पुष्कलेन धनेन वा ।**
**अथवा विद्यया विद्या चतुर्थं नोपलभ्यते ॥ ११२ ॥**

गुरोः शुश्रूषया विद्या लभ्यते । इति मुख्यः पक्षः । अथवा पुष्कलेन महता । धनेन । विद्या लभ्यते । इति द्वितीयः । अथवा विद्यया । विद्या लभ्यते अर्थात्-स्वकीयां विद्यां तस्मै सुशिक्ष्य तस्मात् तदीयां विद्यां गृह्णीयात् । इति तृतीयः । चतुर्थम् उक्तप्रकारभिन्नसाधनम् । विद्योपार्जने न उपलभ्यते एतेन दृष्टव्यवहारसिद्ध्यै अपि उपायान्यतमम् अवश्यम् स्वीकर्त्तव्यम् इति सूच्यते ॥ ११२ ॥

अथ गुरुसामर्थ्यमाह—

**बह्वीर्जिह्वा यथा गृह्णात्यन्हा वह्निस्तथैव च ।**
**ब्रह्मरूपं विजानीयाद् गुरुमेवात्मनः सदा ॥११३॥**

यथा । वह्निः । वह्वीः । जिह्वाः । अह्ना झटिति । गृह्णाति । तथैव । च आत्मनः । गुरुम् एव । सदा । ब्रह्मरूपम् । विजानीयात् । अर्थात् रुष्टो गुरुः यथा अग्निः शीघ्रमेव स्वकीयविभूतिरूपाः सर्वा ज्वालाः आत्मसात् करोति तथैव सर्वाः अध्यापिताः विद्याः आशु आत्मसात् करोति । प्रसन्नः पुनः । गुरुः यथा ब्रह्म संकल्पमात्रेण सकलं जगत् निर्मिमीते । तथा इच्छामात्रेणैव किन्न कुर्यात् । अपि तु । क्षणेनैव सकलविद्याप्रदानसमर्थः स्यात् ॥ ११३ ॥

किञ्च गुरोर्ब्रह्मत्वमेव स्पष्टयति—

**यत्किञ्चिद्वाङ्मयं लोके सर्वमत्र प्रतिष्ठितम् ।**
**करोति तत्प्रदानं यत् तस्माद्ब्रह्ममयो गुरुः ॥११४॥**

लोके यत् किञ्चित् वाङ्मयम् शब्दजालम् तिष्ठति तत् सर्वम् अत्र वेदे प्रतिष्ठितम् वर्त्तते। यत् यस्मात्कारणात् । तस्य वेदस्य प्रदानम् अध्यापनम्। करोति। तस्मात्। गुरुः ब्रह्ममयः । बुधैः स्मृत इति शेषः। अर्थात् ब्रह्म वेदः । तत्प्रदाता गुरुरपि ब्रह्मैव। सर्वज्ञानमयत्वात् ॥ ११४ ॥

अथायोग्यगुरुकरणं निषिध्यते—

**विधिनाऽप्यविधिज्ञानमविधानान्न लभ्यते ।**
**अविधानपरो नित्यं प्रायश्चित्तीयते नरः ॥ ११५ ॥**

नरः। अविधानपरः अयोग्यगुरुकरणाद् विधानरहितः। नित्यम् सदा। प्रायश्चित्तीयते अनुतापार्हो भवति। यतः विधिना सकल-वेदज्ञेन ब्रह्मणा। अपि। अविधानात् अननुष्ठानात् । अविधिज्ञानम् निष्फलत्वम् । नविधिर्ज्ञायतेऽनेनेति व्युत्पत्या फलराहित्यमेव विवक्षितं। न लभ्यते किम् अपि तु लभ्यते एवेति भावः। अर्थात् सर्वज्ञेनापि अविधानात् फलं न प्राप्यते यदि तदा अविधान-परस्य नरस्य तु किमु वक्तव्यम् । अतोऽयोग्योगुरुर्न करणीयः इत्युपदेशः ॥ ११५ ॥

इत्थं योग्यगुरुकरणमावश्यकत्वेन विज्ञाप्य तद्वचनमपि युक्ति-युक्तं चेत् अङ्गीकरणीयम् अन्यथा नेति ब्रुवन् ग्रन्थमुपसंहरति—

**युक्तियुक्तं वचो ग्राह्यं न ग्राह्यङ्गुरुगौरवात् ।**

युक्तियुक्तमिति—गुरोरपि युक्तियुक्तम्। यद्वचः। तद्ग्रा-ह्यम्। ( केवलम् ) गुरु गौरवात्-( तु ) न। ग्राह्यम ( कुतः। यतः। पूर्वमविधानपरस्य नरस्य प्रायश्चित्तीयता उक्ता )

अथ सर्वं सुशिक्ष्य ग्रन्थमुपसंहरन्नाह

सर्वशास्त्ररहस्यं तद्याज्ञवल्क्येन भाषितम् ॥ ११६ ॥

इति श्रीयोगिवरयाज्ञवल्क्यमहर्षिप्रोक्ता
याज्ञवल्क्यशिक्षा सम्पूर्णा ॥



सर्वशास्त्रेति । यत् शास्त्राणां रहस्यं तत्सर्वं याज्ञवल्क्येन महर्षिणा भाषितम् ( न तु रचितम् ) एतेनाज्ञानामपि वेदवदनादित्वं सूचितम् ॥ ११८ ॥

इति श्रीयोगिवरयाज्ञवल्क्यमहर्षिप्रोक्तायां
शिक्षायां वर्णप्रकरणे दीक्षितामरनाथ-
शास्त्रिकृतायां शिक्षावल्ल्याख्यायां
विवृतौ प्रकीर्णकाऽधिकारः ।



श्रीयाज्ञवल्क्यशिक्षाया वल्लीव्याख्येयमर्पिता ।
गंगाधर-मुकुन्दस्य वल्ली-राधा-सुयुक्तरोः ॥ १ ॥

# शुद्धिपत्रम्

| अशुद्ध | शुद्ध | पृष्ठ | पंक्ति |
|---|---|---|---|
| ता | ता- | २ | ३ |
| नीच | नीचे | ३ | १६ |
| त्यर्था | त्यर्थौ | ७ | १२ |
| गि० | शि० | ७ | १३ |
| ६४ | ६२ | ७ | १३ |
| निमिषो | निमेषो | ८ | ३ |
| णुद्- | णुप- | ८ | ८ |
| वः, । | वः । | ८ | २९ |
| इति । म | इति म | ११ | ६ |
| र्विज्ञयम् | र्विज्ञेयम् | ११ | २१ |
| ज्ञयः | ज्ञेयः | १२ | २ |
| भिप्रतत्वात् | भिप्रेतत्वात् | १२ | २४ |
| संवनं | सवनं | २० | २२ |
| श्रतग्राही | श्रुतग्राही | २२ | २८ |
| नृ ÷ ? | न्नृ ? | २३ | १४ |
| दात्मना | दात्मनो | २७ | २२ |
| क्रिमा | किमा | २९ | ६ |
| अर्थबाधकम् | अर्थबोधकम् | ३१ | १७ |
| ह्वित्ये | ह्वित्ये— | ३२ | १६ |
| यौपगद्य | यौगपद्य | ३३ | १८ |
| मित्युक्त | इत्युक्त | ३७ | १६ |
| रिच्च्यते | रिच्च्यते- | ४४ | ८ |
| हेतुमाह | हेतुमाह- | ४६ | ६ |
| वदन्ति आहुः | आहुः वदन्ति | ४७ | ३ |
| क्रष्टो | क्रुष्टो | ५१ | १९ |
| इति | इति । | ५७ | २५ |
| स्वरस्याग्र | स्वरस्याग्रे | ५९ | १० |

| अशुद्ध | शुद्ध | पृष्ठ | पंक्ति |
|---|---|---|---|
| अत्राथ | अत्रार्थे | ६० | १७ |
| अथाङ्गलि | अथाङ्गुलि | ६१ | १४ |
| इत्यर्थः), तथा | इत्यर्थः, तथा ) | ६१ | २४ |
| स्वर्दॆवेषु | स्वर्ह्वेषु | ६४ | ४ |
| इत्यथः | इत्यर्थः | ६४ | ८ |
| उदात्तमयः | उदात्तमयः | ७० | २५ |
| चत्वाराश्च | चत्वारश्च | ७६ | ६ |
| १।१४ | १।१ | ७६ | २८ |
| ९६ | ९४ | ७७ | १० |
| शक्यन्ते | शब्द्यन्ते | ७७ | १९ |
| नामिक्या | नासिक्या | ७८ | १६ |
| स ष श | श ष स | ७९ | ११ |
| अर्थाऽनभिज्ञस्यायि | अर्थाऽनभिज्ञस्याऽपि | ८१ | १९ |
| दायते | दीयते | ८३ | २६ |
| नोङ्कारस्यप्लु | नोङ्कारस्य नियतप्लुतत्वं तत्प्रसङ्गेन अन्यदपिप्लु | ९० | २२ |
| लाजीञ्द्वा | लाजीञ्छ्रा | ९१ | १२ |
| ॐ खं | ॐ३ खं | ९१ | १८ |
| संगच्छते ॥ | संगच्छते । ननु "नाऽस्वरपूर्वा ऊष्मान्तस्थाः" (शु. य. प्रा. ४।१०५) इत्यपवादात् 'पार्ष्ण्यां' इत्यत्र "ऊष्मान्तस्थाभ्यश्च स्पर्शः" ( शु. य. प्रा. ४ । १०२ ) इति द्वित्वाऽप्रवृत्तौ "रेफषकारौ द्वौणकारौ" इत्युव्वटोक्तिरसंगता इति चेत्, मैवम् ऊष्मान्तस्थेत्यत्र द्वन्द्वगर्भैकशेषसमासाऽऽश्रयणेन व्यस्तसमस्तेत्युभयस्यापि निमित्तत्वमित्यङ्गीकारात् । न च शिक्षान्तरवचोविरोधः शङ्कयः, तद्वचनानां शुक्लयजुर्भिन्न शाखाविषयत्वेनाङ्गीकारात् । शुक्लयजुषि विशिष्य ऊष्मान्तस्थाभ्यः स्पर्शद्वित्वनियमनाच्च | ९३ | २६ |

| अशुद्ध | शुद्ध | पृष्ठ | पंक्ति |
|---|---|---|---|
| हरते | हरति | ९५ | १९ |
| घटित | घटक | ९७ | ५ । १४ |
| शब्दे | शब्दे एवम् ( १८।४९ ) व्वरुणेह इत्यत्रत्य वरुणशब्दे च | ९७ | २६ |
| तथापि. इ. | तथापि यत्र स्वरितघटितः तत्रैवरस्वरितनियमः इ | ९७ | २७ |
| रेफ विष्टा | रेफविशिष्टा | ९८ | १ |
| घटिते | घटके | ९८ | ११ |
| देवस्त्वा | देवस्त्वा | ९८ | १२ |
| प्रकीर्णकाऽधिकरे | पदाधिकारे(या.शि.व.८४) | ९९ | १८ |
| मानत्वत् | मानत्वात् | १०० | २३ |
| विमोको | र्विमोको | १०१ | २० |
| ६४ | ६२ | १०२ | २१ |
| द्वितीयाऽनि | वर्गद्वितीयस्य अनि | १०२ | २६ |
| गूँकार | गूँकार | १०६ | २९ |
| विश्लेषेन | विश्लेषेण | १०७ | १९ |
| मात्रिक | मात्रिकः | १०८ | १५ |
| रूपो | रूपौ | १०९ | २४ |
| नम् ॥ | नम् ॥” | ११४ | १४ |
| स्थयार्वा | स्थयोर्वा | ११८ | ५ |
| स | सः | १२० | २० |
| प्रात | प्राति | १२४ | १९ |
| कपोलौभ | कपोलौ प्रकृत्या भ | १२५ | १४ |
| वार्द्धी | वार्ध्री | १२६ | १६ । १९ |
| वार्द् | वार् | १२६ | २० |
| रेणपि | रेणवि | १२७ | २८ |
| चापि पराश्रितौ | पराश्रितौ | १२९ | २२ |
| मात्रस्या | मात्रस्याऽ- | १३३ | २० |
| नुनासिक्यैऽपि | नुनासिक्येऽपि | १३३ | २१ |
| संग्रहः ॥ | संग्रहः । वस्तुतस्तु “ छ ” पुस्तकपाठ एव | | |

| अशुद्ध | शुद्ध | पृष्ठ | पंक्ति |
|---|---|---|---|
| | साधीयान्। तेन-पञ्च स्थानिनः अ-आ-ई-ऊ-ऋ-कारा: रक्ताः सन्तः क्रमेण घातादिसंज्ञकाः पञ्चैव रङ्गाः नकारविकाराः शौनकादिमते सन्तीत्यर्थः | १३५ | १४ |
| विज्ञयः | विज्ञेयः | १४० | १० |
| ज्ञयम् | ज्ञेयम् | १४० | २५ |
| त्रिष्टभेति | त्रिष्टुभेति | १४२ | २६ |
| विल्लिमने | विल्म्मिने | १४९ | ८ |
| व्याख्पात | व्याख्यात | १४९ | २३ |
| त्वार्यूष्मा | त्वार्यूष्मा | १५० | १८ |
| रुकारा | ककारा | १५५ | ७ |
| द्वितीय | द्वितीयं | १५५ | १७ |
| वर्गचतुष्टयेषु | वर्गपञ्चकेषु | १५७ | १९ |
| स्थानिन | स्थानिनः | १५८ | १ |
| उद्दान्ता | उदात्ता | १६० | २३।२४ |
| रहः | रहः० | १६५ | २२ |
| ब्रा० | ब्रा० ११।५।८ | १६५ | २२ |

---

## अत्र टिप्पणीस्थपद्यानामनुक्रमणी( ) ईदृक्कोष्ठे ज्ञेया

पृष्ठ

द



न



प



२२॥

पृष्ठ

प



व



भ



म



य

# सूचना

यद्यपि यह ग्रन्थ अल्पकाय होने पर भी प्रकाशित होते इतना विलम्ब योग्य न था, तथापि शरीर का स्वास्थ्य ठीक न रहने के ही कारण इतना काल विलम्ब अर्थात् सन् १९३३ सितम्बर से प्रकाशन कार्य आरम्भ होकर आज सन् १९३७ सितम्बर में समाप्त होने से ४ वर्ष का पूर्ण अन्तराय हुआ है। अतः ईश्वरेच्छा ही ऐसी जान कर तथा दृष्टिदोष एवं छपाई की त्रुटियों को पाठक क्षमा करेंगे।

इस ग्रन्थ का प्राप्तिस्थान—

दीक्षित अमरनाथ शास्त्री

८९, पशुपतीश्वर,

बनारस सिटी।